खुरपादोपरि पीठे तु नन्दिकां हृदयावधि ।
अथवा केवलं शीर्षे स्थापयेत् मध्यभागतः ॥ १४८ ॥

अन्ते कल्पितरेखायां दैर्घ्याकारेण वर्धयेत् ।
अधरं चुम्बिता वृत्तत्रयभागेन खोदयेत् ॥ १४९ ॥
भागत्रयसमावेशे मंडलाधरचुम्बि च ॥ १४९॥

अर्धचन्द्राकृती बाहू पक्षाकारे च पार्श्वयोः ।
मध्ये कंठावधिमुखं नन्दिका शुभदा तदा ॥ १५० ॥

पक्षद्वये लताकारच्छेदं कृत्वा मनोरमे ।
वृत्तोर्ध्वे चन्द्रिका दिव्या खुरोर्ध्वे चुम्बिता यथा ॥ १५१ ॥

एते तु शिल्पभेदाः स्युः लतावज्रांगखोदनम् ।
अनन्तरं शृणु दिव्यशालानिर्माणभेदयोः ॥ १५२ ॥

भित्तिभागाः —

पंचकर्म च्छेदकर्म भागकर्म तथैव च ।
आडे वेधस्य भित्तीनां कल्पयेदर्धभागतः ॥ १५३॥
भित्तिप्रस्थगते वेधे अधोदेशे च कल्पयेत् ॥ १५३ ॥

अर्धैकच्छिदभित्तीनामपरार्धे स्वलंकृतम् ।
ततः प्रत्यानर्थक्षेत्रं वेदभागैश्च भाजयेत् ॥ १५४ ॥
प्रतिपार्श्वे अनर्थादि वेदभागेषु भाजयेत् ॥ १५४ ॥

प्रतिभागैकभागे च छेदयेत् खान्दिमुत्तमाम् ।
मध्ये भूम्यनुसारेण राहांश्च कारयेत् सुधीः ॥ १५५ ॥

कोणकोभयपार्श्वेण पूर्वाकारेण कारयेत् ।
खान्दिमध्ये गुणरेखां छेदयेदर्धभागतः ॥ १५६ ॥

केवलानर्थपार्श्वे च न कुर्यात् शिखरेण च ।
अनर्थ मण्डयेदूर्ध्वे विचित्रे गुम्फनादयः ॥ १५७ ॥

तोरणदेशभेदेन यंत्राञ्च वज्रमस्तकम् ।

भैरवयन्त्रम् —

तन्निम्ने चार्धभागेन तोरणं भैरवं तथा ॥ १५८ ॥

विषमं चतुरस्रं च पाषाणपीठमुत्तमम् ।
त्रिच्छेद विविधमूर्ध्वे रेखां प्रस्थे विभाजयेत् ॥ १५९ ॥

कोणमारभ्य त्रिभुजं विपरीतमुखाकृति ।
कोणच्छेदा मध्यरेखाचुम्बिनी बिन्दुभाविनी ॥ १६० ॥

ऊर्ध्वमध्यमहारेखामध्ये * मस्तकस्थापनम् ।
* विगहस्य ।
कुर्यात् त्रिकोणपीठे * च जटाजूटं च मस्तकम् ॥ १६१ ॥
* शीर्षे ।

प्रथमच्छेदमूले च कण्ठं नाभिं द्वितीयके ।
पृष्ठतृतीयभेदे च खचिताः सुमनोहराः ॥ १६२ ॥

निम्नरेखां समाकृष्य पादाभ्यां विपरीतगाम् ।
दक्षे त्रिशूलं संस्थाप्यमूर्ध्वरेखावलम्बितम् ॥ १६३ ॥

ऊर्ध्वभुजैकसदृशमूर्ध्वबाहोश्च सन्निधौ ।
निम्नवामांगमध्ये च त्रिभुजं रेखपार्श्वयोः ॥ १६४ ॥

दक्षिणभुजदंडानां त्रिभुजे पूर्ववत् सुधीः ।
उत्कीर्णच्छेदबिन्दुनां मध्ये बिन्दुं वियोजयेत् ॥ १६५ ॥

जानुत्रिभुजमध्यन्तु द्वितीयच्छेदसन्निभम् ।
किञ्चित् तिर्यग् वामपादत्रिभुजत्रितयादपि ॥ १६६ ॥

तृतीयच्छेदमारभ्य तृतीयबाहुचुम्बिते ।
तथा दक्षपाददेशः त्रिकोणार्धे विशेषतः ॥ १६७ ॥

एवं कुर्यात् तत्र मूर्ति सस्त्रीकं भैरवं प्रति* ।
* भैरवाग्रणीः ।
शूलं स्यादेकहस्ते तु पानपात्रं तथा रे ॥ १६८ ॥

यदि स्यात् नन्दिकश्चोग्रः चतुर्भजसन्निभः ।
खट्वाङ्गं चैव पाशञ्च हस्ते कुर्यात् विधानतः ॥ १६९ ॥

विकटं वदनं घोरं जटाजूटविमण्डितम् ।
एवं श्रीविग्रहः स्थाप्यो द्वारबन्धस्य निम्नगे ॥ १७० ॥

पार्श्वे शक्तिद्वयं वापि अधो निम्ने सुशोभने ।
कर्तव्यं प्रथमच्छेदे वामे च दक्षिणे तथा ॥ १७१ ॥

चतुरत्रिभुजं क्षेत्रे पार्श्वबिन्दुसमाश्रितम् ।
करणीया चतुर्हस्ता ऊर्ध्वत्रिकोणसन्निधौ ॥ १७२ ॥

पादयुग्मं च निम्नांशे मध्यरेखान्वये तथा ।
वामपादस्तथा तिर्यग् वामांशे रेखनिश्चते ॥ १७१ ॥

तोरणलक्ष्मीयंत्रम् —

शृणु वत्स प्रवक्ष्यामि यंत्रज्ञानं सुनिर्मलम् ।
यंत्रास्य द्वारमध्यस्थतोरणं मध्यवर्तिनी ॥ १७२ ॥

द्विविधं तोरणं लक्ष्मीतोरणार्थे नियोजयेत् ।
गजलक्ष्मीः शुभलक्ष्मीः लक्ष्मीः सर्वशुभप्रदा ॥ १७३ ॥

कुर्यात् पीठं चतुरस्रं पाषाणे सुमनोहरे ।
पाषाणषोडशांशे च तोरणाधारमेव च ॥ १७४ ॥

पीठं दैर्घ्ये तथा प्रस्थे विभागः पंचधा तथा ।
कोणच्छेदद्वयं दत्वा मध्यबिन्दुसमाश्रितम् ॥ १७५ ॥

द्वितीयच्छेदरेखायां छेदकोणचतुष्टयम् ।
मध्ये कुर्यात् महामायां* द्विभुजां वा चतुर्भुजाम् ॥ १७६ ॥

* महालक्ष्मीम्

मस्तकं मध्यरेखायां द्वितीयच्छेदमध्यगम् ।
कण्ठञ्च हृदयं नाभिं मध्यबिन्दुसमन्वितम् ॥ १७७ ॥

छेदलम्बने ।
वामदक्षिणबाहुभ्यां द्वितीया छेदवर्त्तिनी ।
भुजदंडस्योर्ध्वदेशे छेदबिन्दुं यदाचरेत् ॥ १७८ ॥

श्रीपद्मं बिन्दुमाकृष्य तदूर्ध्वे कुंजरद्वयम् ।
शुण्डानां शीर्षदेशे च प्रथमारेखवर्त्तिनी ॥ १७९ ॥

तृतीयरेखामालम्ब्य चतुर्थचुम्बिते पुनः ।
वृत्तानिम्ने बाहुयुगं वराभयविधायकम् ॥ १८० ॥

भुजदंडः सम्मुखे च भक्तानामभयप्रदः ।
एकपादेन भूस्पर्शाद् भूदेवी परिकीर्तिता ॥ १८१ ॥

मध्यच्छेदद्वये बिन्दुमारभ्यासनयुग्मकम् ।
चरणद्वयम् ।
गुल्फोत्कीर्णं च पार्श्वेण प्रथमा रेखमाश्रितम् ॥ १८२ ॥

पाददंडनिम्नच्छेदे तृतीयबिन्दुशोभिते ।
मध्यत्रिंकोणमध्ये च कुर्यात् वसनमुत्तमम् ॥ १८३ ॥

निम्ने षोडशपत्राणि दश पत्राण्यथापि वा ।
विमलं चांशुकं निम्ने षोडशदलवेष्टितम् ।
इति ख्यातं महायंत्रं * राजकार्यार्थमुत्तमम ॥ १८४ ॥

*महालक्ष्मीः ।

अथवा तोरणं लक्ष्मीः शिल्पशास्त्रानुसारतः ।
कारयेत्तु तथा मूर्तिं भिन्नाकारे तथैव च ॥ १८५ ॥
यथाध्यानानुसारतः ॥ १८५ ॥

प्रतिमा शुभलक्ष्म्याश्च भूमौ स्यात् चतुरस्रगे ।
ऊर्ध्वे प्रस्थे च कर्तव्याः पञ्च च्छेदाः समानतः ॥ १८६ ॥

कुर्यात् कोणद्वये छेदं सुयत्नाद् वामदक्षिणे ।
कोणद्वयं समाने च विशेषादूर्ध्वभागके ॥ १८७ ॥
कोणवर्गसमाकारे छेदयेत् विधिपूर्वकम् ॥ १८७ ॥

मध्यबिन्दुं च रेखाणामूर्ध्वे निम्ने च योजयेत् ।
मध्ये ततः कोणपीठे * महच्च चतुरस्रकम् ॥ १८८ ॥

*कोणवर्गे ।

हृदयं स्पृशते यद्वत् मध्यबिन्दु तदुत्तमम् ।
प्रतिमायां शीर्षदेशं योजयेदूर्ध्वमध्यगे ॥ १८९ ॥

तृतीयावरणे नाभिं योनिदेशे विशेषतः ।
मध्यरेखां समारभ्य जानौ वामे च दक्षिणे ॥ १९० ॥

वामपादं निम्नदेशे छेदरेखासमन्वितम् ।
दक्षिणपादस्य मध्ये च प्रस्थरेखासमाश्रितः ॥ १९१ ॥

वामदक्षिणबाहुभ्यां मध्यच्छेदाश्रिता महत् ।
सम्मुखे पल्लिकरणं तृतीयबिन्दुसन्निधौ ॥ १९२ ॥

ऊर्ध्वे मस्तकपार्श्वे च कमलं खोदयेत् सुधीः ।
निम्ने तथासनं दिव्यं गजराजसुशोभितम् ॥ १९३ ॥

एतानि यंत्ररूपाणि शुभलक्ष्मीः शुभप्रदा ।

तोरणबन्धः––

शृणु वत्स प्रवक्ष्यामि द्वारबंधं विशेषतः ॥ १९४ ॥

बंधांश्च मूर्त्तिभेदांश्च संक्षेपात् कथयाम्यहम् ।
प्रथमावरणे बन्धे युग्मौ वाधिकनागकाः ॥ १९५ ॥

प्रथमे युग्मरेखे च द्वितीये खान्दिरुत्तमा ।
द्विगुणं सर्परेखाभ्यां युग्मनागसुशोभितम् ॥ १९६ ॥

बलिस्तृतीया तद्रूपे नरराशिविमण्डिते ।
लताकारे लतादंडः गेलवनारीमूर्तिभिः ॥ १९७ ॥

वामकरे लतादंडः दक्षिणो हृदयस्थले ।
अर्धकुंभाकृतिः पादः गेलवनारी तदोत्तमा ॥ १९८ ॥

केनचित् शिल्पिनां मध्ये रामकृष्णादयः कृताः ।
तत्पार्श्वे बलिसंयुक्ते रंगिणी पुष्पशोभिता ॥ १९९ ॥

तद्बलेरर्धभागे तु स्थापयेत् शिल्पिपुंगवः ।
चतुर्थावरणे दिव्ये जलपत्रादि भूषयेत ॥ २०० ॥

अर्धचन्द्राकृतौ पीठे क्षुद्ररेखागुणैः सह ।
एकोर्ध्वे चैकपत्राणि स्थापयेत् समभावतः ॥ २०१ ॥

तत्पार्श्वप्रान्तस्थानेन पद्मपत्रं सुशोभनम् ।
एतान्यपरभेदानि तोरणालंकृतिक्रिया ॥ २०२ ॥

शृणुष्व मुखशालासु सम्मुखा रेखाविधिं पुनः ।
रेखाभेदस्तथा छेदः वसन्तफेणिकादयः ॥ २०३ ॥

पूर्वं शास्त्रानुसारेण कुर्यात् पीठं मनोरमम् ।
तदूर्ध्वे कारयेद् भेदं शृणु शिष्य न संशयः ॥ २०४ ॥

तोरणं स्थाप्य गंभीरे अष्टभागांश्च योजयेत् ।
चतुरभागमध्येन तोरणच्छेदकादयः ॥ २०५ ॥

तन्नाम तोरणं बन्ध अथवा अलसाचयः ।
न कुर्यात् भिन्नवल्लभीर्मूर्तीश्चापि न काश्चन ॥ २०६ ॥
वर्धितस्थले ।

तदनन्तरं संविभाज्यं मूल * मंडपसम्मुखम् ।

मुखमंडप ।

प्रस्थस्योभयपार्श्वे तु षोडशांशांतरे तथा ॥ २०७ ॥

एकभागेन खान्दीनां गृहीतस्तम्भपार्श्वक ।
तत्परे भित्तिमारभ्य सम्मुखादि प्रति प्रति ॥ २०८ ॥

पीठनिरूपणम्——

पीठनिरूपणं कुर्यात् भित्तिकार्याग्रशोभने ।
पीठञ्च पंचधा श्रेष्ठं कणि वीथी च कुंभिका ॥ २०९ ॥

सिंहपीठं च कूर्मश्च शिल्पशास्त्रानुसारतः ।
तन्मध्ये विहितः कूर्मः त्रिधा पादसमन्वितः ॥ २१० ॥

अधोदेशे यथा पाद ऊर्ध्वपादं तथा न्यसेत् ।
मध्यदेशं कूर्मपृष्ठाकारेण कारयेत् सुधीः ॥ २११ ॥

अपरं कथयिष्यामि गौणपीठादिनिर्णयम् ।
सिंहासनाकृतिः पार्श्वे मध्ये वाड़समन्वितः ॥ २१२ ॥

सिंहपीठमिति ख्यातं रेखे वा रथ एव च ।
पार्श्वद्वये पादयुग्मं मध्ये कुंभो निवेशितः ॥ २१३ ॥

एवं कुंभाकृति पीठं प्रासादे सुमनोहरम् ।
बिना कर्म बिना पादं केवलं भूमिमाश्रितः ॥ २१४ ॥

दृढाकृतिः पाददेशः वीथीपीठं तदुच्यते ।
कणिकाकारपीठं तत् कुंभवत् कणिका सह ॥ २१५ ॥

अध ऊर्ध्वं च कूर्मागं मध्ये कणिः सुशोभना ।
ते सर्वे पीठमध्ये तु वीथी सिंहो हि केवलम्* ॥ २१६ ॥

* मुख्यतः ।

अन्यथा श्रेष्ठकूर्मो हि अपरैः किम् प्रयोजनम् ।
पीठं चतुर्दिशं कुर्यात् शिल्पांगविधिभावना ॥ २१७ ॥

पादस्य द्विगुणः कूर्मः कूर्मोर्ध्वाङ्गं गुणोर्धयः ।
एवं दृढतमं पीठं स्थापयेत् समभागतः ॥ २१८ ॥

पीठे हीने सदा कीर्तिः जायते विकला महत् ।
अन्ते वृत्तद्वयं कुर्यात् तोरणं सम्मुखं प्रति ॥ २१९ ॥

अर्धचन्द्राकृति वृत्तं समभागेन योजयेत् ।
तोरणद्वयपार्श्वे च खान्दिं कृत्वा मनोरमाम् ॥ २२० ॥

अन्ते तु स्थापनं कुर्यात् नागस्तम्भं सुशोभनम ।
यथा भित्तिः तथा स्तम्भः चतुर्थांशन्तु तोरणम ॥ २२१ ॥

स्तम्भविधिः——

शृणु वत्स प्रवक्ष्यामि स्तम्भस्य विधिनिर्णयम् ।
स्तम्भा हि द्विविधाः प्रोक्ता नागकुंभांशशोभिताः ॥ २२२ ॥

तन्मध्ये नागकः श्रेष्ठः कुम्भो गौणः स उच्यत ।
ऊर्ध्वे कुंभऽ* स्तथा निम्ने मध्ये स्तम्भः सुशोभितः ॥ २२३ ॥

* ऊर्द्धे कुंभाकृतिः चूलः ।

कुंभमध्ये सदा वल्लीः शोभनाः * कलिकादयः ।

* आलंब ।

नागस्तम्भः सदा श्रेष्ठः स्थापत्यांगविवर्धनः ॥ २२४ ॥

धनधान्यसुभाग्यानां दायिका नागनायिका ।
प्रस्थानुसारतः कुम्भे कुर्यात् भागचतुष्टयम् ॥ २२५ ॥

द्विभागः स्तम्भदण्डोपि अपरे पादशीर्षयोः ।
कुंभस्थले पंच छेदे आंक्ष्ये पादञ्च कारयेत् ॥ २२६ ॥

प्रथमावरणं ऊर्ध्वे कुंभांशं द्विगुणं तथा ।
अर्धगुणं कटिनिम्ने ऊर्ध्वे गुण लता तथा ॥ २२७ ॥

द्विभागः स्तंभदण्डश्च पादान्ताभिरनन्यताँ ।
पाददेयं प्रकुर्वीत पंचकर्म सुनिर्मलम् ॥ २२६ ॥

आद्ये पादस्तथा कुम्भः द्विगुणान्ते लता तथा ।
ऊर्ध्वे च गुण्डिका माला आलम्बादि यथाविधि ॥ २२७ ॥

इति पादस्तथा कुंभो डोरी अर्धे च वल्लभी ।
ऊर्ध्वभागे च यत्नेन रेखां कृत्वा च मानसे ॥ २२८ ॥

मध्ये क्षुद्राकृतिः मूर्तिः नागरी पुष्पशोभिता ।
पट्टी निम्ने लता छेदः नागार्थं भाग पूर्ववत् ॥ २२९ ॥

स्तम्भोपरि आलम्बश्च त्रिवलीशोभितं यथा ।
आलम्बनिम्नभागेन अर्धचन्द्राकृतौ अहिः ॥ २३० ॥

अहेः फणं तथा कृत्वा सप्तघा पञ्चधापि वा ।
मध्य फणस्य पार्श्वेण सथापयेदपरं फणम् ॥ २३१ ॥
मध्ये किञ्चिद् बृहत् फणं पार्श्वे क्षुद्रतरं तथा ॥ २३१ ॥

निम्ने चानन्तमूर्त्तिः स्यादर्धनागनराकृतिः ।
मध्येऽनन्तो महाशेषः ।
हलञ्च मुसलं दिव्यमथवा वद्धअंजलिः ॥ २३२ ॥

निम्ने द्विवलि वा त्रिभिः कृत्वा नागवपुः तथा ।
निम्ने द्विवलि देहं च अथवा त्रिवलिं तथा ।
नागपुच्छावलिः दृश्या निश्चयं सम्मुखादपि ॥ २३३ ॥

कोणकविधानम्––

तदन्ते कोणकस्थानं सम्मुखे पार्श्व एव च ।
शृणु त्वं कोणकस्थानं छेदो भेदस्तथा गुणाः ॥ २३४ ॥
कोण चतुष्ट्योः स्थाने ।

भित्युनुसारेण बाडो हि मुख्यतश्चार्धभाजितः ।
पक्षभागे तथा मुख्यं जांघकर्म स्थलावधि ॥ २३५ ॥
अर्द्धभागे तथा जांघं कुर्याच्च बन्धनावधि ॥ २३५ ॥

अधोभागे पंच कर्म सूक्ष्माकारे मनोरमे ।
अपरे बाड़मध्ये च समे जंघाकृतिस्तथा ॥ २३६ ॥
जांघं स्तंभाकृतिः ।
कोणका निम्नदेशे च स्थानप्रस्थो * यथाक्रमम ।
* पंचकर्म ।
अधोभागैकखुरायां कुम्भकोर्ध्वे पटिस्थलम् ॥ २३७ ॥

पट्टयूर्ध्वे * निम्नगा भूमिः डमरू कटिरूपिणी ।
* घटोर्ध्वे ।
अन्ते बहिश्छेदभागस्तदूर्ध्वे पट्टिरुत्तमा ॥ २३८ ॥

पट्टिमध्ये च वल्लभिः दैर्घ्याकारे * मनोरमे ।
* क्षेत्राकारे ।
पट्टयंशनिम्नभागेन चम्पकपत्रं सुशोभनम् ॥ २३९ ॥

चम्पकदलं तथा निम्ने कुम्भमध्ये विशेषतः ।
पट्टयूर्ध्वे कणिकाकारे पुनः डमरुभूमिका ॥ २४० ॥

समभागं तथा स्थाने कोणाकारे तथैव च ।
पनसाकंटकान् कृत्वा पंचभागैकभागितान् ॥ २४१ ॥

पुनरूर्ध्वे च गर्भस्य कण्यूर्ध्वे च गुणद्वयम् ।
मध्ये वसन्तरेखाश्च नानाकारेण मण्डयेत् ॥ २४२ ॥

अपरार्धे समभागे दद्याद् भेदचतुष्टयम् ।
अपरार्द्धस्थले तत्र कुर्यात् भागचतुष्टयम् ।
पंचधा वा त्रिधा दैर्घ्ये कृत्वा भागान् समस्थल ॥ २४३ ॥

मध्यभागो यथा तत्र अपरोर्ध्वे परिमिते ।
योजयेत् क्रमनिम्नेन पंचकर्म विधीयते ॥ २४४ ॥

एतानि भेदरूपाणि कोणककर्मकौशलम् ।
निम्ने * वज्रशीर्षमध्ये नायिका नन्दिका तथा ॥ २४५ ॥
* खुरस्थले ।

शृणु जंघाविधिं चात्र मध्ये देशे लतावलिः ।
अपरच्छेद * भागेपु पुष्पाकारे तथा गुणाः ॥ २४६ ॥
* पार्श्व ।

भित्तिमूलं समारभ्य प्रांतदेशान्तकर्मसु ।
एते तु कोणकाभेदाः शिल्पभेदा मनोहराः ॥ २४७ ॥

अनर्थपागनिर्णयः —

शृणु चात्र प्रवक्ष्यामि अनर्थपागनिर्णयम् ।
भित्त्याकारं कृतं येन * सावधानं समानतः ॥ २४८ ॥
*समोच्चेन शिखरादिसमानतः ।

कुर्यात् त्रयं दैर्घ्यदेशे प्रस्थे च युगकल्पित ।
मध्ये यावत् निशाभागः तावत् भागत्रयं सुधीः ॥ २४९ ॥

ऊर्ध्वे शिखरदेशश्च निम्नमध्ये च गव्हराः ।
निम्नपार्श्वरेखायुक्ते गृहं कृत्वा मनोहरम् ॥ २५० ॥

निम्नभागे त्रिधा कुर्यात् पंचकर्म सुयत्नतः ।
प्रस्थे ।
निशाजंघैकभागेन स्तम्भाकारे लताद्वयम् ॥ २५१ ॥

ऊर्ध्वे तदनुसारेण लतापट्टिं च खोदयेत् ।
तदूर्ध्वे शिखरं देशः डमरूभूमिवत् सदा ॥ २५२ ॥
वर्द्धितदेशवत् सदा ।

तदूर्ध्वे पट्टिरूपेण वसन्तवल्लभीचयः ।
वसन्तसमभागेन शिखरमूर्ध्वे नियोजयेत् ॥ २५३ ॥

तत ऊर्ध्वमुखान्यत्र पद्मपत्राणि खोदयेत् ।
तदूर्ध्वे पट्टिका दिव्या वसन्तादिसमानतः ॥ २५४ ॥

तदूर्ध्वे भित्तिभागेन कारयेद् वज्रमस्तकम् ।
मध्ये निशागृहं यत्र तत्र मूर्त्यादिस्थापनम ॥ २५५ ॥

एते तु बन्धभेदाः स्युः*श्रृणु रहस्यमुत्तमम्* ।
* अनर्थ। * तत्त्वम् ।
दिक्पालो वा महाविद्याबन्धनाम्ना स कथ्यत ॥ २५६ ॥

दिक्पालं वा महाविद्यां निशामध्ये तदाचरेत् ।
विष्णोर्भवनयुक्तेन इन्द्रादि दिक्पालकाः ।
रुद्रे भैरवमूर्तिः स्यात् चण्डीगृहे च भैरवी ॥ २५७ ॥

अत्र मुख्यं प्रवक्ष्यामि शक्तिगृहार्थमुत्तमम् ।
महाविद्यादियंत्राणि यदनुसारविग्रहः ॥ २५८ ॥

देशभेदे* देशरुच्या अनर्थ गृह उत्तमे ।
* यथाशास्त्रे ।
स्थापयेच्च महाविद्यां गौर्यादिदशमातृकाः ॥ २५९ ॥

श्रृणु चात्र महायंत्रं मुर्त्तिन्यासं विचक्षण ।
एकस्य यंत्रभागेन कारयेत् सकलानपि ॥ २६० ॥

शक्तियंत्रम्––

कृते निशागृहे तत्र शिलां नीत्वा विधानतः ।
कुर्यात् एतन् महायंत्रं विविधशक्तिमूर्त्तिभिः ॥ २६१ ॥

नाम्ना कात्यायिनी शुली उग्रा चंडा विभीषिणी ।
नव दुर्गास्ततो घोराः कुर्यात् यंत्रान्तरे तथा ॥ २६२ ॥

चतुरस्रः समश्चैव विषमस्थानभेदतः ।
नीत्वा भागं ततः कृत्वा ततः छेदः त्रिधा कृत ॥ २६३ ॥

ऊर्ध्वे प्रस्थे तथा छेदं समभागेन छेदयेत ।
अन्ते कोणच्छेद भागे छेदयेत् चतुरावधि ॥ २६४ ॥

छेदबिन्दुं तथा मध्ये मध्यबिन्दुसमाश्रिते ।
मध्यस्थदेर्घ्ये छेदस्तु द्वितीयप्रस्थस्पर्शकः ॥ २६५ ॥

क्रमद्वये प्रतिरेखा छेदादि रोधयेत् पुनः ।
वामदक्षिणकोणस्तु निम्ने ऊर्ध्वे तथैव च ॥ २६६ ॥

प्रतिरेखां समारभ्य कृत्वा भागं पृथक् पृथक ।
अन्ते निम्नच्छेदबिन्दुं मध्यप्रस्थस्थलावधि ॥ २६७ ॥

ऊर्ध्वे दत्वा न्यसेच्चापि वृत्तार्धं द्वितीयादपि ।
ऊर्ध्वे च निम्नदेशे च त्रिकोणञ्च चतुष्टयम ॥ २६८ ॥

अर्धत्रिकोणमध्येन दशमातृगणास्तथा ।
तदूर्ध्वे तोरणार्धे च अर्धवृत्तं च मध्यमे ॥ २६९ ॥

ऊर्ध्वत्रिकोणमध्यस्थे कुर्यात् शीर्षमलंकृतम् ।
द्वितीयबिन्दुं यावत्तु गलदेशन्तु मंडयेत् ॥ २७० ॥

तृतीयमध्यबिन्दुश्च नाभिस्थानं तदुच्यते ।
तत्र तु स्थापयेदंघ्रिमधोभागे कृते सदा ॥ २७१ ॥

तदनुसारतस्तत्र तृतीयप्रस्थसन्निधौ ।
कुर्यात् रेखाद्वयं दीर्घे विग्रहं बाहुसंकुलम् ॥ २७२ ॥

चतुर्बाहुः क्वचिद् वा स्याद् दशबाहुसमन्वितः ।
द्विभुजोऽष्टः भुजः क्वापि कारयेद् विग्रहं सुधीः ॥ २७३ ॥

यथा बाहुस्तथा गुणाः हृदयस्कन्धसन्निभम् ।
दण्डः पल्लिः तथा ऊर्ध्वे वृत्तरेखासमाश्रिता ॥ २७४ ॥

यथा ध्यानं तथा मूर्तिः यदुक्तं शास्त्रसम्मतम ।
विकलो विग्रहो नष्टः विघ्नः तत्र तु जायते ॥ २७५ ॥

शृण चात्र प्रवक्ष्यामि निम्नभागस्य निर्णयम् ।
आसनं विविधं चैव कारयेत् छेदसन्निधौ ॥ २७६ ॥

विना छेदं नैव कुर्यादंघ्रिदेशं कदाचन ।
एते तु यंत्रभेदाः स्युः गौर्यादिरूपभेदतः ॥ २७७ ॥

दंडायमानमूर्त्तिसु पादन्यासक्रमं शृणु ।
एकपादस्तदा दैर्घ्ये किञ्चित्तिर्यक् तथापरः ॥ २७८ ॥

एकपादो मध्यभागे करणीयो यथाविधि ।
अन्ये च कुटिलाः पादा नानाभंगीसमाश्रिताः ॥ २७९ ॥

करणीयौ तथा पादौ छेद गुणान्वितेऽधिके ।
आसनावधि मूर्त्तिञ्च कारयेत् कमलोत्तम ॥ २८० ॥

उपवेशितरूपार्थं कुर्यात् पीठं मनोरमम ।
निम्ने च वाहनं कुर्यात् यद्रूपा देवता भवेत् ॥ २८१ ॥

वाहनरूपमूर्त्तिस्तु मध्यरेखावलम्बने ।
किरीटं कुंडलं हारं कुर्यात् चारु सुशोभितम् ॥ २८२ ॥

वस्त्रं च भूषणं चैव अम्लाने सूचिकर्मणि ।
एतां कुर्यात् तथा मूर्त्तिं प्रासादस्यानुरूपिणीम् ॥ २८३ ॥

वल्लभिभेदाः—

लता पुष्पोपरि युक्ता वल्लभ्यादि यथा महत् ।
शृणु वल्लभिभेदांश्च नानाकारान् यथान्तरे ॥ २८४ ॥

केन रूपेण तद् यंत्रम् करणीयं सुखप्रदम ।
लता कुञ्चिता[१] हंसा[२]च वर्त्तुला[३] आगमा[४] तथा ॥ २८५ ॥

रतिकेरा[५] सगुम्फा[६] च कुटिला[७] समभागिका[८] ।
पल्लवा[९] कलियुक्ता[१०] सा मेघा[११] एकादश स्मृताः ॥ २८६ ॥

एकैके तु क्रमे यन्त्रं वक्ष्यामि पृथगाकृतिम् ।
कर्तव्यं तु तथा शिल्पी यन्त्रानुसारमाचरेत् ॥ २८७ ॥

कुञ्चिता—

शृण्वत्र तु लताभेदान् गुणच्छेदांस्तथैव च ।
दंडाकारे समक्षेत्रे ह्यथवा पट्टिसन्निधौ ॥ २८८ ॥

लतां कुर्याच्च तत्स्थाने न कुर्यात् तिर्यगाकृतिम् ।
आद्ये पाषाणगात्रे च रेखां कृत्वा च दैर्घ्यतः ॥ २८९ ॥

लम्बाकारे तथा प्रस्थे तदन्ते पत्रखोदनम ।
युग्माकारे च पत्राणि कुटिलवृन्तकल्पितम् ॥ २९० ॥

कुञ्चिता वल्लभीभेदा दर्शकानन्दवर्धकाः ।
प्रतिपत्राग्रे वृन्तञ्च अपरार्धे दलानि च ॥ २९१ ॥

सा लता कुञ्चिता श्रेष्ठा भित्तिदेशानुसारतः ।
शृणु हंसलतादिव्या श्रेष्ठा वसन्तचारिणी ॥ २९२ ॥

कठिनप्रस्तरे सूक्ष्मे हंसाकृतिमथाचरेत् ।
कारयेद् दिव्यहंसं च पुच्छं पत्राकृतिं सदा ॥ २९३ ॥

चतुरस्रे विषमक्षेत्रे हंसाङ्गमूर्ध्वमण्डले ।
कारयेत् पत्रभूषाञ्च हंसा इति च सोच्यत ॥ २९४ ॥

पक्षाणां पृष्ठदेशे च कुटिला शीर्षगामिनी ।
लतापत्रसमं कुर्यात् शिरोर्ध्वं कण्ठमेव च ॥ २९५ ॥

वर्तुला——

नियमानुगतश्छेदे, शृणु वर्त्तुललक्षणम ।
प्रति समाकृतिः क्षेत्रे वृत्तच्छेदञ्च वर्त्तुलम् ॥ २९६ ॥

वृत्तरेखान्वये वृन्तं मध्यदेशे दलानि च ।
प्रतिकोणे तथा कुर्यात् कलिकां छेदरूपिणीम् ॥ २९७ ॥

एवं वल्ली सदा श्रेष्ठा वर्त्तुला श्रीविमण्डिता ।
लम्बक्षेत्रे सदा श्रेष्ठं जंघाकर्म मनोहरम् ॥ २९८ ॥

आगमा——

चतुरस्रसमाकारमाद्ये क्षेत्रे समाचरेत् ।
वर्त्तुलैकमथान्यञ्च समक्षेत्रे यथाविधि ॥ २९९ ॥

ऊर्ध्वक्षेत्रे तथा पत्रं सर्षपपत्रवत् सदा ।
नवांकुरसमं पत्रं आगमा जांघमंडना ॥ ३०० ॥

रतिकेरा——

अर्धे च विषमा वर्गे ऊर्ध्वगा शिखरं प्रति ।
प्रतिभूमितले ऊर्ध्वे द्विवृत्तं क्रियते तथा ॥ ३०१ ॥
प्रतिप्रस्थतले वामे दक्षिणोर्ध्वे वृत्तं तथा ॥ ३०१ ॥

प्रथमं वृत्तमारभ्य लम्बक्षेत्रे यथाविधि ।
तन्निम्नवर्तिनि पीठे ऊर्ध्वे च विपुला भवेत् ॥ ३०२ ॥

दीर्घाकारे तथा पत्रकल्पिते वृत्तचुम्बिते ।
निम्ने क्षेत्रागतं पत्रं कुटिलं चाग्रभागतः ॥ ३०३ ॥
तले च कुञ्चिताकारं ऊर्ध्वे विष्फारिताकृति ॥ ३०३ ॥

त्रिधा वा पंच वा छेदा जायन्ते पंचधा ।
रतिकेरा लता श्रेष्ठा जांघे वा भित्तिमण्डने ॥ ३०४ ॥

गुम्फना——

वर्त्तुला समभागेन मध्यदेशे च गुम्फकम् ।
गुम्फमध्ये तथा क्षेत्रे वानरी शूकरी तथा ॥ ३०५ ॥

व्याघ्रसिंहगजांश्चैव पशुपक्षिमृगादिकान् ।
कारयेत् निपुणं शिल्पी गुम्फोद्गमनप्रेक्षिणी ॥ ३०६ ॥

एवं सुगुम्फभेदाश्च कलिका पत्रशोभिनी ।
प्रस्थाकारे तथा क्षेत्रे प्रस्थे च विषमाकृतौ ॥ ३०७ ॥

कुटिला——

कुंभक्षेत्रे यथा नालं वक्राकारे सुलम्बितम्* ।
*सर्पमार्गाकृतिः ।
तदा कुटिलरेखायां करणीयं मनोहरम् ॥ ३०८ ॥
नालोभयदिशि कुर्याच्च पत्रादि सुमनोहरम् ॥ ३०८ ॥

मध्ये पत्रं तथा पुष्पं कलिकादि सुशोभितम् ।
कुञ्चिता वर्त्तुला मिश्रा समभागे समन्वय ॥ ३०९ ॥

समभागिका——

समभागिका तु सा ख्याता जांघे भित्तौ मनोहरा ।
संकीर्णक्षेत्रप्रस्थे च वृश्चिकपादवत्तथा ॥ ३१० ॥

पल्लवा——

वसन्तपट्टिदेशे च नवपत्राकृतिं चरेत् ।
नालहीना च सा बल्ली पद्मपीठान्तरागता ॥ ३११ ॥

पल्लवा बल्लभी श्रेष्ठा शिल्पशास्त्रानुसारतः ।

कलिकायुक्ता——

तथा समप्रस्थक्षेत्रे चतुरस्त्रासमस्थल ॥ ३१२ ॥



एन ४१३३–१४अ

कलिकासहितं नालं एकस्यां दिशि कारयेत् ।
पत्रं विशोभितं तत्र कलिकाः समपल्लवाः ॥ ३१३ ॥

एषा ख्याता तथा नाम्ना कलियुक्ता मनोहरा ।
प्रस्थाकारे तथा क्षेत्रं निर्यक् च समभागतः ॥ ३१४ ॥

ऊर्ध्वानुलम्बितां रेखां पल्लवाकृतिवच्चरेत ।
केवलं चोर्ध्वभागे तु कुञ्चिताः पल्लवास्तथा ॥ ३१५ ॥

मेघाकृतिः सदा चाग्रं वसन्ते चातिशोभितम् ।
एते तु वल्लीभेदाः स्युर्नानालंकृतिकर्मणि ॥ ३१६ ॥

शृणु पुष्पाकृति दिव्यां चतुर्भेदैस्तु भाविताम् ।
रंगिणी चातुकी चैव पंकजं चोत्पलं तथा ॥ ३१७ ॥

चतुर्भेदानि पुष्पाणि रचयेत् पट्टिकर्मणि ।
द्वार तोरणे मध्ये वा निशाभागे मनोरमे ॥ ३१८ ॥

कुर्यात्पुष्पावलिं रम्यां विधिपूर्वं विचक्षणः ।
पट्टिक्षेत्रे समे पीठे चतुरस्राकृतिस्थले ॥ ३१९ ॥

रंगणी—

मध्यदेशे कर्णिका च वर्त्तुलाकारकेसरा ।
चतुर्दिशि कृते छेदे तदन्ते दन्तखोदनम् ॥ ३२० ॥

रंगिणी पुष्पतुल्ये च करणीया सुयत्नतः ।
एतत्* पट्ट्याकृतिक्षेत्रे विषमाकृतिछेदने ॥ ३२१ ॥

*स्थूल ।

चातुकिः—

तत्क्षेत्रप्रतिभागे च मध्यभागे च कर्णिकाम् ।
कोणवर्गाकृतिक्षेत्रे विषमबाहुं च कारयेत् ॥ ३२२ ॥

नेत्राकारं वर्गक्षेत्रं तत्र भूमिस्तु जायत ।
निम्ने चोर्ध्वे त्रिकोणं च गुणमाला तथोपरि ॥ ३२३ ॥

द्विगुणाः सर्वरेखाश्च प्रतिकोणावलम्बने ।
एवं चातुकिमाला सा सर्वानन्दप्रदायिनी ॥ ३२४ ॥

पङ्कजा––

क्षीणे वा व्यापके क्षेत्रे वर्गाकारं समान्वये ।
मध्ये तु कर्णिका दिव्या तत्केन्द्रे वर्त्तुलोत्तमा ॥ ३२५ ॥

कणिका समभागेन पंचधा वाष्टधा भवेत् ।
दशारं द्वादशारञ्च कमलमाला प्रकथ्यते ॥ ३२६ ॥

दलानि वृत्तमध्यम ।
नानाविधं तथा पत्रं खल्याकारे क्वचित् तथा ।
केनचित् शिल्पशास्त्रेण बहुधा कमलं चरेत् ॥ ३२७ ॥

उत्पला––

पूर्वभूमिसमाकारे मध्ये कुर्याच्च कर्णिकाम् ।
तदूर्ध्वे समभागेन वृत्तं ३ कार्यं यथेच्छया ॥ ३२८ ॥
त्रय ।

सर्ववृत्तान्तरस्थाने क्षुद्राकारे मनोहरे ।
खोदयेत् दलभागेन विचित्रे क्रमवर्धितम् ॥ ३२९ ॥

ऊर्ध्वत्रिकोणभूमौ च कणिः पत्राकृतिः सदा ।
कर्तव्या पुष्पिका दिव्या उत्पला सा विचक्षणैः ॥ ३३० ॥

अस्मिन् क्रमे अलंकारैः मण्डयेत् सर्वसंधिषु ।
विनालंकारन्यासेन कीर्त्तिर्जायेत मध्यमा ॥ ३३१ ॥

सर्वाङ्गे भूषणैर्युक्ते कीर्त्तिर्जायेत चोत्तमा ।
प्रासादो भूषणैर्हीनोऽधमो जायेत निश्चयम ॥ ३३२ ॥

केवलं शिल्पभेदेन मंडपे पोटले तथा ।
उत्तमं कथ्यते गेहं शिल्पशास्त्रानुसारतः ॥ ३३३ ॥

गृहादिभागनिर्णयः–––

शृणु चात्र प्रवक्ष्यामि गृहादिभागनिर्णयम् ।
*पार्श्वे पृष्ठे विशेषतः ।
अनर्थपार्श्वदेशे च यत् क्षेत्रं पार्श्वयोस्तथा ॥ ३३४ ॥

शृणु तत्रार्द्धक्षेत्रं च गृहे स्तंभाकृतिस्तथा ।
शृणु स्थलसीमा क्षेत्रं गृहस्तम्भाकृतिर्भवेत् ।
समार्धपरिमाणे च कोणकं तुल्यप्रस्थतः ॥ ३३५ ॥

भाजितं पक्षभागेन अर्धैकनिश्चिते स्थले ।
अनुराहस्तु कर्तव्यः प्रासादे मंडलोत्तमः ॥ ३३६ ॥

तत्खान्यन्ते तथा स्थानं राहपागः स कथ्यत ।
अनुराहेण यद् उच्चं पञ्चधा तद् विभाजयेत् ॥ ३३७ ॥

लम्बाकारे तथा दैर्घ्ये मध्येन मध्यमात्रयः ।
जांधकर्म प्रसिद्धं तत्पार्श्वे द्विगुणशोभिते ॥ ३३८ ॥

जाघमध्यांशयुग्मेन पंचकर्म तलद्वये ।
पूर्वानुसारतो भागं कुर्यात् शिल्पी न संशयः ॥ ३३९ ॥

ऊर्ध्वार्धभागनिकटे संकीर्णे पादकुंभकम् ।
कर्णि वसन्तं तद् रम्ये कारयेत् पट्टिकोपरि ॥ ३४० ॥

ऊर्ध्वभागे तथा मध्ये लम्बाकारे च पट्टिका ।
जांघत्रिभागैकभागे पट्टिकामूर्ध्वमंडले ॥ ३४१ ॥

पट्ट्याश्चोभयपार्श्वेण भारकेन्द्राधिपान् गणान् ।
कारयेदुभयक्षेत्रे विपरीतमुखाकृतीन ॥ ३४२ ॥

एतस्योभयपार्श्वे तु भारभैरवखोदनम ।

भारकेन्द्राधिपनिर्णयः——

श्रृणुश्व भैरवं मुख्यं शिल्पकर्मणि चोत्तमम् ।
नानाभेदैः स प्रसिद्धः भाररक्षार्थदैवतम् ॥ ३४३ ॥

युगलं वा एकमात्रं वा मानवाकृतिभैरवः ।
अथवा सिंहरूपेण अथवा विरलाकृतिः ॥ ३४४ ॥

विपरीताकृतिः क्वापि तथा कोतूहलप्रदः ।
एते तु पंचभेदाः स्युः शास्त्रलक्षणसम्मताः ॥ ३४५ ॥

यथा भारः करे न्यस्तः तथा मूर्तिं तु न्यासयेत् ।
भारवहनकर्त्री सा मूर्तिर्भारस्य वाहिका ।
पट्टेरुभयपार्श्वे च कुक्कुटासनधारिणी ॥ ३४६ ॥

युगला——

ऊर्ध्वे करद्वयं न्यस्तं रक्षाकारे दृढं यथा ।
ऊर्ध्वे करद्वयं स्थाप्यं यथा उत्तोलितावृते ।
प्रस्तरे कल्पयेच्छेदं कोणादपि कोणादये ॥ ३४७ ॥

ऊर्ध्वत्रिकोणभागे तु कारयेन् मस्तकं तथा ।
उदरं मध्यभागे च बालकाकृतिनांघ्रिणा ॥ ३४८ ॥

करद्वयं चोर्ध्वभागे पल्लीबाहुसमन्वितम् ।
एतयोर्युगलं श्रेष्ठं भाररक्षार्थमुत्तमम् ॥ ३४९ ॥

शृणुष्वाधममार्गे तु एका मूर्तिर्विधीयते ।
मध्यपाषाणगात्रे च छेदरेखा विधानतः ॥ ३५० ॥

छेदबिंदुं समाक्रम्य ऊर्ध्वरेखा तथैव च ।
दक्षिणपार्श्वक्षेत्रे च कुर्यात् लपनमुत्तमम् ॥ ३५१ ॥

कटिदेशे निम्नबाहुमाक्रम्य मध्यभागकम् ।
वीरासनस्थितां मूर्तिमुड्डीयमानवत्तथा ॥ ३५२ ॥

दक्षिणबाहुदेशे च पाददेशं सुशोभनम् ।
बामबाहुगुल्फदेशे दण्डाया ऊर्ध्वमण्डले ॥ ३५३ ॥

न्यासेदुत्तम एकस्य गंधर्वा कुञ्चिता शिरः ।
शृणु सिंहाकृतिः मूर्तिः भारनाम्ना प्रकीर्तिता ॥ ३५४ ॥

सिंहः——

पट्टिस्थाने सिंहमुखं यथा च वज्रमस्तक ।
पट्टिमध्ये तथा लम्बः करणीयः त्रिधाकृतिः ॥ ३५५ ॥

पार्श्वे कोणाकृतिं रेखां द्विगुणां पट्टिसन्निधौ ।
कारयेत् पट्टिस्थानेन सिंहक्षेत्रं तदुच्यत ॥ ३५६ ॥

कल्पिते मंडले सिंहं कुर्यात् लम्बाकृतौ सदा ।
अधोदेशे च सिंहस्य रौद्रमूर्तिर्विधीयते ॥ ३५७ ॥

कारयेत् स्तम्भबन्धे तु शिल्पशास्त्रानुसारतः ।
पूर्वाकारे कृते क्षेत्रे पार्श्वे च त्रिभुजाकृतौ* ॥ ३५८ ॥

*विपरीताकृतिम् ।

बिराला——

मंडलं कल्पयेत् तत्र विराजन्यासमुत्तमम्* ।

*विराल हरिमस्तकम् ।

शोभने कर्णिका निम्ने सन्धि* देशान्तरे तथा ॥ ३५९ ॥

*खान्दी ।

विराजभार एतेषां गृहान्तर्गतदेशिकः ॥ ३६० ॥

एषा कल्पितरेखायां नानाकारे कुतूहले ।

कौतूहलः——

गजमस्तकसंयुक्ते शरीरं सिंहवत्तथा ।

कुत्रचित्* मृगशीर्षे च शृंगं शार्दूलशोभितम् ॥ ३६१ ॥

*नरशिर ।

एष कौतूहलो बन्धो नानाभेदः स जायते ।

नानालंकारसंयुक्तं प्रासादं मंडयेत् सुधीः ॥ ३६२ ॥

पूर्वाध्याये यथा चोक्तः मुखशालाङ्गनिर्णयः ।

वेढ़कान्ते तथा खान्दी खान्दीपार्श्वे गृहन्तथा ॥ ३६३ ॥

राहस्य चोभयोः पार्श्वे * खान्दीविश्रान्तिमण्डलम् ।

*अनुराहोत्तरे ।

अन्ते गवाक्षनिर्माणं पार्श्वस्थाने यथास्थलम ॥ ३६४ ॥

गवाक्षनिर्माणविधिः——

पार्श्वद्वये गवाक्षस्य निर्माणकौशलं शृणु ।

गवाक्षार्थं यथा स्थानं पूर्वश्लोके विनिश्चितम् ॥ ३६५ ॥

तत् स्थानं समभागेन पंचभागेषु भाजितम ।

समभागे तथा प्रस्थे चतुर्धा त्रिगुणान्वित ॥ ३६६ ॥

पार्श्वद्वये समभागे मध्यमा त्रयसंधिषु ।

प्रतिभागे स्तम्भरूपेण छेदयेत् समभागतः ॥ ३६७ ॥

प्रतिकल्पितदैर्घ्येण द्विगुणीकृतकल्पितम् ।

तत्स्थाने अलसाबन्धः विश्रान्तिगर्भकान्तर ॥ ३६८ ॥

अलसाबन्धनस्थाने नारीबन्धः स उच्यते ।

निम्नदेशे तदाकारे लम्बभागे विधानतः ॥ ३६९ ॥

पंचकर्म निम्नदेशे कुञ्चिते कारयेत् सुधीः ।

ऊर्ध्वेऽर्धसमभागे च तदाकारे कृतं तथा ॥ ३७० ॥

कुञ्चितोर्ध्वे कणिभागः प्रधानकुम्भपादयोः ।

तदूर्ध्वे पट्टिका दीर्घे यथा प्रस्थे गवाक्षिका ॥ ३७१ ॥

लताकारे पीठन्यासे खोदयेत् द्विविधं तथा ।
लतापीठद्वयोर्मध्ये लताशिखरवर्त्तिनी ॥ ३७२ ॥

पीठश्रेष्ठास्तथा मुख्या मुखशालाङ्गनिर्णये ।
तदूर्ध्वे मध्यमा क्षेत्रं कारयेन् मंडनं तथा ॥ ३७३ ॥

नानाविधकृतस्थानं मंडयेत् चतुरस्रगे ।
विद्यादानं च मुख्यं हि चतुरङ्गबलादिभिः ॥ ३७४ ॥

कारयेन् नृपबन्धस्य मण्डले मण्डनावधि ।
शृणु तत् स्थानभागेन यथाविधि विधानतः ॥ ३७५ ॥

शिक्षादानमूर्त्तियंत्रम्—

करणीया तथा मूर्त्तिः शिक्षादानं तथोत्तमम ।
वर्गाकारसमक्षेत्रे भूनिम्ने यंत्रविस्तृते ॥ ३७६ ॥

मूर्तिं विधानतः कुर्यात्तदन्ते चोर्ध्वबन्धना ।
शृणु वत्स प्रवक्ष्यामि यंत्रकल्पितमंडल ॥ ३७७ ॥

विषमं चतुरस्रञ्च लम्बबाणान्वये तथा ।
प्रस्थे चतुरभागं तु पंच गेहे तथैव च ॥ ३७८ ॥

ऊर्ध्वे चतुर्थबाहूनां पार्श्वे त्रिभुजमाचरेत् ।
त्रिभुजस्य च द्वौ बाहू तृतीयप्रस्थसन्निद्धौ ॥ ३७९ ॥

पुनः षष्ठदीर्घरेखा अग्रदेशान्वये तथा ।
तब्दाहोराद्यप्रस्थे च अन्तिमकोणभागिनी ॥ ३८० ॥

एवं समानभागे च निम्ने च पार्श्वमण्डले ।
कोणच्छेदद्वयं तत्र शृणु मूर्त्त्यादिनिर्णयम् ॥ ३८१ ॥

मध्यत्रिकोणभूम्यां च वामांगे पार्श्वमस्तकम ।
हृदयावधि तद्रूपं कोणच्छेदान्वये करः ॥ ३८२ ॥

अपरं करं तु तद्भावे विपरीतदिशां गतम् ।
मध्यबिन्दौ यदा नाभिः कुर्यादासनमाश्रितम् ॥ ३८३ ॥

प्रस्तारणं तथा दिव्ये यावत् प्रस्थद्वितीयकम् ।
आसनं मध्यक्षेत्रे च निम्ने मूर्तिद्वयं तथा ॥ ३८४ ॥

विषमवर्गक्षेत्रे च करणीयाः मीमांसकाः ।
मध्यत्रिकोणक्षेत्रे च कर्तव्या उपचारकाः ॥ ३८५ ॥

कारयेत् तत्र दीपञ्च अथवा पुष्पमालिकाम ।
ऊर्ध्वे षष्ठलम्बरेखाचुम्बिते लपनावधि ॥ ३८६ ॥

कर्त्तव्यं खोदनं शिष्यमूर्तेर्नानाप्रकारतः ।
षट्संख्याः सप्तसंख्यांका अथवा चाष्टसंख्यकाः ॥ ३८७ ॥

द्वितीये सम्मुखे भागे प्रथमे ज्ञानकर्षकम् ।
कलानुसारतः कुर्यात् शिल्पिज्ञानमपेक्षिताम् ॥ ३८८ ॥

कुर्यात्तदा सदा श्रेष्ठं शिक्षादानं यथाविधि ।
समं वा विषमं क्षेत्रं चतुरस्रसुनिश्चिते ॥ ३७६ ॥

मूर्त्तिं कुर्यात् तथा क्षेत्रे यावद् भित्तौ तु वंधना ।
शृणु वत्स प्रवक्ष्यामि यंत्रं गोप्यं सुनिश्चितम् ॥ ३७७ ॥

विषमं चतुरस्त्रं च वाणछेदेन भाजयेत् ।
प्रस्थक्रमे तथा क्षेत्रं, वाणगृहसमन्विते ॥ ३७८ ॥

ऊर्ध्वे मध्यगुणाभासे पार्श्वे च त्रिभुजाकृतौ ।
तृतीयप्रस्थयोगेन योजयेत् कोणवर्गवत् ॥ ३७९ ॥

पुनः प्रान्ते यथा दैर्ध्यं तदारभ्य गुणस्तथा ।
योजयेत् तृतीयप्रस्थे उभयं दिगवलम्बने ॥ ३८० ॥

एवं समानक्षेत्रे च निम्ने च पार्श्वमण्डले ।
कोणच्छेदद्वयं तत्र एतद्धि गुणमंदिरम् ॥ ३८१ ॥

मध्यत्रिकोणदेशे च वामाङ्गपार्श्वदर्शने ।
हृदयावधि तद्रूपं कोणच्छेदानुसारतः ॥ ३८२ ॥

सव्यं करं तथा वामे संमुखे विपरीतगाः ।
मध्यबिन्दुः यदा नाभौ तन्निम्ने आसनं चरेत् ॥ ३८३ ॥

आसनं च तथा दिव्ये यावत् प्रस्थद्वितीयकम् ।
मध्ये अस्यादासनं निम्ने मूर्त्तिः माणवकद्वयोः ॥ ३८४ ॥

विषमवर्गक्षेत्रे च करणीया मीमांसकाः ।
मध्यत्रिकोणक्षेत्रे च कर्त्तव्या उपचारकाः ॥ ३८५ ॥

खोदयेत् तत्र दीपं च अथवा पुष्पपेटिकाम् ।
षष्ठी लम्बगुणे ऊर्ध्वे यावन् मूर्त्तिः शिरस्तथा ॥ ३८६ ॥

तद्देशे खोदयेत् शिष्यमूर्तीः नानाविधाकृतीः ।
ऋतुसिन्ध्वथवा अष्ट सदा विद्यार्थिमंडलम् ॥ ३८७ ॥

द्वितीयभागसंयुक्ते संमुखे ज्ञानकर्षकम् ।
शास्त्रानुसारतः कुर्यात् शिल्पिज्ञानमपेक्षितम् ॥ ३८८ ॥

अथवा मण्डलस्थाने चतुरंगबलान्वितम् ।
नृपतिं स्थापयेत् शिल्पी देशरुच्यनुसारतः ॥ ३८९ ॥

गवाक्षे तु कदाचित्स्यात् केवलं गर्भकावलिः ।
गवाक्षान्ते तथा छेदान् कुर्यात् स्तम्भाकृतिर्यथा ॥ ३९० ॥

गवाक्षबंधः स ख्यातः तत्पार्श्वे स्तंभ एव च ।
स्तम्भं पूर्वोक्तभेदेन कुर्यान् नागादिशोभितम् ।

अलसानिर्णयः—–

श्रृणु त्वं कथयिष्यामि अलसानिर्णयं तथा ॥ ३९१ ॥

लौकिके कथितो नारीबन्धः* शिल्पसमुद्भवः ।
*कन्याबन्धः ।

विना नारीं यथा वासः क्रीडा नारीं विना यथा ॥ ३९२ ॥

विना च ललनां लोके कीर्तिर्जायेत निष्फला ।
गन्धर्वयक्षरक्षांसि पन्नगाः किन्नरास्तथा ॥ ३९३ ॥

दर्शनात् तत्र मुह्यन्ति नागरीभंगिमुत्तमाम ।
उत्तमां रमणीं कुर्यात् सर्वालंकारभूषिताम् ॥ ३९४ ॥

नानाभंगीसमाहारे अलसा सा विधीयते ।
गवाक्षे शिखरे वापि मुखशालांगमण्डने ॥ ३९५ ॥

नारीबन्ध इति ख्यातः भद्रे वा शिखरे तथा ।
श्रृणु भेदास्तु विविधा भावसाधारिणी तथा* ॥ ३९६ ॥
*अलसा भंगीलक्षणम् ।

भावानुसारतो नाम्ना कन्याबन्धः *स उच्यते ।
*शास्त्रसंमतम् ।

अलसा, तोरणा, मुग्धा, मानिनी, डालमालिका ॥ ३९७ ॥

पद्मगंधा, दर्पणा च विन्यासा ध्यानकर्षिता ।
केतकीभरणा, दिव्या मातृमूर्त्तिः तथैव च ॥ ३९८ ॥

चामरा, गुंठना, मुख्या नर्त्तकी, शुकसारिका ।
नूपुरपादिका रम्या, मर्दला चातिशोभना ॥ ३९९ ॥

एताः षोडश मुख्याः स्युरलसाबंधभेदतः ।
स्थानभेदे तथा रम्यं मूर्तिस्थानानुसरतः ॥ ४०० ॥

करणीया तदाकारे रमणीये सुयत्नतः ।
सर्वक्षेत्रगते मूलक्षेत्रे लम्बाकृतौ ध्रुवम् ॥ ४०१ ॥

अलसायंत्रम्––

विना तु विषमक्षेत्रं हीनाङ्गा अलसा सदा ।
लम्बाकारगते क्षेत्रे मध्ये रेखाविधानतः ॥ ४०२ ॥

प्रस्थभावे मध्यबाहुः तत्स्थाने वेदसंख्यकाः ।
वामप्रस्थबिन्दुयुक्ते बाहुभ्यां विषमांशके ॥ ४०३॥
विपरीतगा ।
योजयेदध ऊर्ध्वे च त्रिकोण विषमा यथा* ।
प्रस्थार्द्ध योजयेत्तथा ।
पुनः दक्षिणपार्श्वे तु अध ऊर्ध्वं च कोणके* ॥ ४०४ ॥

रेखा तदाकृतिः पार्श्वे मध्यप्रस्थसमाश्रिता ।
पार्श्वस्थलं समारभ्य द्वयकोणावधिस्तथा ॥ ४०५ ॥

सव्यार्द्ध निम्नदेशे च मध्यप्रस्थस्थलावधिः ।
विषमं त्रिभुजक्षेत्रं दक्षिणपार्श्वदेशतः ।
एतान्यलसायंत्राणि सर्वकन्यार्थमुत्तमम् ॥ ४०६ ॥

अलसा––

मध्यरेखा वामभागे मस्तकं कल्पयेत्तथा ।
वेदभागे वक्षदेशः प्रस्थभागे सुयत्नतः ॥ ४०७ ॥

ऊर्ध्वमध्ये यथाबाहुः मस्तकोर्ध्वे करः स्थितः ।
मध्यबिन्दुं समारुह्य नाभिः वामे कटिस्तथा ॥ ४०८ ॥

मध्यबिन्दुं समारभ्य दक्षिणांघ्रिं च वक्रतः ।
वामांघ्रिं बाहुयुक्तेन लम्बाकारे मनोहर ॥ ४०९ ॥

छन्दिता स्पन्दिता ख्याता द्विविधा अलसा मता ।

तोरणा––

तोरणा चैव यंत्रे च केवलं दक्षिणे करे ॥ ४१० ॥

बाहुः बाहुं समालम्ब्य पुनः त्रिभुजमाश्रिते ।
तोरणा स्पन्दितामुद्राधारिणी सुमनोहरा ॥ ४११ ॥

मुग्धा––

हस्ते नागशिरा मुद्रा मुखं सम्मुखक्षेत्रगम ।
नागमुद्रासमा दक्षे वामबाहुसमन्वित ॥ ४१२ ॥

त्रिभुजबाहुमालम्ब्य कटिदेशे व्यवस्थित ।
पादद्वयं तथा सव्ये स्पन्दिता तिर्यगाकृतिः ॥ ४१३ ॥

एषा मुग्धावती नारी नानलंकारभूषिता ।

मानिनी––

अन्तभागे शिरोदेशः वामभागेन वक्रितः ॥ ४१४ ॥

पुनः शीर्षे छेदरेखा कल्पिता दक्षिणे भुजे ।
शिरोर्ध्वे दक्षिणा पल्लिः* मानमुद्रा तु कथ्यते ॥ ४१५ ॥

*वामे अधर एव च ।

दंडाकारे वामपादः दक्षिणः कुञ्चिताकृतिः ।
पाददंडः सम्मुखे च भित्तिदेशावलम्बितः ॥ ४१६ ॥

आलम्बं काञ्चला दिव्यं सुरम्यं केशबन्धनम ।
अर्धोन्मीलितनेत्राभ्यामधरे लास्यभावना ॥ ४१७ ॥

एषा हि मानिनी कन्या शिल्पशास्त्रानुसारतः ।

डालमालिका––

त्रिच्छेदनिम्ने शिरसि पार्श्वदृश्या मनोरमा ॥ ४१८ ॥

तदूर्ध्वे दक्षिणे दंडं डालानुसारिणी तथा ।
दक्षिणत्रिभुजो बाहुः दक्षिणं भुजमाश्रितः ॥ ४१९ ॥

कट्यूर्ध्वे पार्श्वमध्ये च नाभिमध्यस्थलान्वितम् ।
किञ्चिन्निम्ने वामबाहुः दंडरेखाकृतौ तथा ॥ ४२० ॥

डालाग्रस्पर्शिणी मुद्रा वामदेशे सुशोभने ।
सव्यपादस्तु तत्प्रस्थे वामबाव्हलम्बिनी ॥ ४२१ ॥

वामत्रिभुजरेखायां जायते दंडदक्षिणे ।
वामपादस्तथा दक्षे दंडाकारे मनोहरे ॥ ४२२ ॥

दक्षिणत्रिभुजो बाहुः लम्बिनी डालमालिका ।

पद्मगंधा——

वामावर्ता सदा रम्या वामपार्श्वेऽधिकं तथा ॥ ४२३ ॥

शिरो वपुस्तथा पादौ मुख्यतो भंगिरुत्तमा ।
शिरःस्थाने तथा शीर्षे हृदयं तृतीयावधि ॥ ४२४ ॥

वामबाहुस्तथा पार्श्वे दंडबाहुसमन्वये ।
अम्लानपंकजं तत्र शोभनं वामपल्लवे ॥ ४२५ ॥

सव्यहस्तस्तथा निम्ने लम्बाकारे कटिस्थले ।
किञ्चित् तिर्यक् दक्षपादो निम्नांशे गव्हरं प्रति* ॥ ४२६ ॥

*भित्तिमाश्रिते ।

दंडाकारस्तथा वामत्रिभुजा बाहुलम्बिनी ।
दक्षिणस्कन्धदेशे च केशगुच्छं सुशोभनम ॥ ४२७ ॥

पद्मगन्धप्रिया सा तु पद्मगंधेति विश्रुता ।

दर्पणा——

वाम* त्रिभुज रेखोर्ध्वे मस्तकोपरि शोभितम् ।

*कर ।

पल्ली शिरःकेशदेशे न्यासितं सम्मुखं प्रति ॥ ४२८ ॥

दक्षिणावनता दृष्टिः रेखामध्ये च दक्षिणे ।
बाहुनिम्नगता दिव्या मध्यखण्डत्रिकोणग ॥ ४२९ ॥

दर्पणं धारितं रम्यं जनस्यानन्दकारिणी ।
वक्षोऽग्रद्वयवामे च मध्यरेखासमाश्रिता ॥ ४३० ॥

दक्षिणं पादमारभ्य वामनिम्नकोणावधिम् ।
पुनः वामे तथा जानुः समाने त्रिभुजान्वये ॥ ४३१ ॥

मध्यरेखातले रम्ये किञ्चिद् वक्रे च दक्षिणे ।
कटिवस्त्रपरीधानं रमणीया तदाकृतिः ॥ ४३२ ॥

एता दर्पणभेदाश्च कन्या रम्याः सुशोभनाः ।
नानाभेदे तथा स्थाप्यं दर्पणं मुखसम्मुखे ॥ ४३३ ॥

विन्यासा––

वामांगी दक्षिणे भंगी पार्श्वमुखसुशोभना ।
मस्तकप्रान्तदेशे च बाहुभ्यां स्कन्धसन्निधौ ॥ ४३४ ॥

वामबाहुस्तथा वामे त्रिभुजे बाहुसन्निधौ ।
मध्यरेखान्यये प्रस्थे भुजदंडश्च सम्मुखे ॥ ४३५ ॥

अपरबाहुस्तु तद्रूपे पल्लिन्यासः स उत्तमः* ।
*कर कच्छपिकाकृतिः ।
मध्यबिन्दुं समारभ्य वामपादश्च दंडवत् ॥ ४३६ ॥

स विन्दुपार्श्वे देशेन दक्षिणत्रिभुजावधि ।
दक्षिणजानु तु तन्निम्ने दंडप्रान्तावधिं चरेत ॥ ४३७ ॥

पादाग्रपार्श्वदेशे च दक्षिणे त्रिभुजावधि ।
जपन्याससमा मुद्रा विन्यासा ध्यानकर्षिणी ।
दिव्यैर्वरैश्च संयुक्ता कटिदेशे सुशोभना ॥ ४३८ ॥

केतकीभरणा––

वामदेशे शिरश्चैव वक्षःकटिकरादयः ।
वक्षो मध्यस्थलव्यापि मध्यरेखान्तरे तथा ॥ ४३९ ॥

दक्षिणत्रिभुजरेखालम्बिनी दक्षिणे भुजे ।
छेदबिन्दुं समारभ्य दंडमध्यगुणान्वितम् ॥ ४४० ॥

पल्ली तद्वामपार्श्वे च मस्तकोपरि शोभिता ।
करे च केतकीपत्रं केतकीभरणा शुभा ॥ ४४१ ॥

वामपार्श्वे कुञ्चिता च कटिभारस्वरूपिणी ।
तदूर्ध्वे करदेशे च स्थाप्यं पुष्पं सुशोभनम् ॥ ४४२ ॥

कटिस्तथोदरं पूर्णं वामदेशे मनोहरे ।
त्रिभुजबाहुनिम्नांशे वामपादं सुलक्षणम ॥ ४४३ ॥

दक्षिणनिम्नकोणान्ते पादरेखा हि जायत ।
दक्षिणजानुतो निम्ने त्रिभुजकोणसम्मुखे ॥ ४४४ ॥

तन्निम्ने शोभितो दंडो दक्षिणच्छन्दपादवत् ।

मातृमूर्तिः––

शृणुष्वानन्तरं दिव्यं मातृमूर्तेश्च निर्णयम् ॥ ४४५ ॥

यथास्थाने स्थितं शीर्षं मध्यरेखासमन्वितम् ।
शरीरमखिलं दिव्यं शीर्षं शृणु देहांगनिर्णयम् ॥ ४४६ ॥

वामबाहुस्तथा वामे वामत्रिभुजसन्निधौ ।
आरभ्य च्छेदरेखान्ते तदन्ते भुजदंडयोः ॥ ४४७ ॥

तन्मध्ये बालमूर्त्तिञ्च वामत्रिकोणसन्निधौ ।
मुखमारभ्य पादान्तमध्यरेखासमाश्रितम् ॥ ४४८ ॥
पिचिण्डतनुमुत्तमम् ।
दक्षिणस्कन्धमालम्ब्य जानुदेशान्तरस्थिते ।
दक्षिणकरविन्यासः साधारणपदद्वयम् ॥ ४४९ ॥

एषा मातृसमा मूर्त्तिः बालकादिसुशोभिता ।
किंचित् सव्यानुगः पादः वामश्च दक्षिणस्तथा ।
सौम्याकारं तथा कुर्यात् साधारणपदद्वयम् ।

चामरा——

श्रृणुष्वान्यतमान् भेदान् चामरा देवसेविका ॥ ४५० ॥

मातृमूर्त्तिसमाकारे तद्भावे चांघ्रियुग्मयोः ।
तथा स्थाने तदाकारे ऊर्ध्वे* केवलमन्यथा ॥ ४५१ ॥
*शीर्षदेशे ।

मुखं दक्षिणावक्रं च दक्षबाहुस्त्रिकोणके ।
भुजदंडसमाकारे हृदयञ्च विशोभयेत् ॥ ४५२ ॥

वामबाहुस्तु निम्नांशे वामे च त्रिभुजान्तर ।
भुजदंडसम्मुखे च वस्त्रालंकारधारिणी ॥ ४५३ ॥

चामरं वामहस्ते च वामस्कन्धोपरिस्थिते ।
चामरा विग्रहे सौम्या देवतानन्दवर्धिनी ॥ ४५४ ॥

गुंठना——

गुंठना गुण्ठनवती रमणी* पृष्ठदर्शिका ।
त्रिभंगप्रस्थभागेन मस्तकं समभावतः ॥ ४५५ ॥
*अवगुण्ठ ।

कटिमध्यरेखामध्ये मध्यबिन्दुसमाश्रिता ।
वामा भुजा सम्मुखे च अधरं तलमाश्रिता ॥ ४५६ ॥

दक्षिणभुजो तत्पार्श्वे त्रिकोण* बाहुसन्निधौ ।
*त्रिकोणोर्ध्वे ।
ऊर्ध्वदेशे शिरश्चैव गुंठना अवगुंठना ॥ ४५७ ॥

पूर्णपृष्ठाकृतिर्बाला वीरासनमधिष्ठिता ।
वामे निम्ने बहुलता लताकारे मनोहरे ॥ ४५८ ॥

वामपादः तथा निम्ने लतागुणसमन्विते ।
त्रिभुजस्पर्शिणी दक्षे वामजानुसमाश्रिता ।
पाददंडं दक्षिणे च मूले रेखाग्रस्पर्शिता ॥ ४५९ ॥

कदाचिद्धारयेद् वस्त्रं पुष्पं वा व्यजनं तथा ।
एषा नारी महादिव्या गुंठना रमणी प्रिया ॥ ४६० ॥

नर्त्तकी––

कन्या सा नर्त्तकी दिव्या वक्रा दक्षिणदृष्टितः ।
यथास्थाने तथा शीर्षं बाहुभ्यां गगनं प्रति ॥ ४६१ ॥

छन्दपल्लियुता चोर्ध्वे मध्यरेखाबलम्बने ।
मध्यबिन्दुस्थले नाभि रुत्कृष्टनृत्यमोहिता ॥ ४६२ ॥

दक्षिणबाहुबिन्दुं च तत्स्थाने शोभना कटिः ।
वामनिम्नकोणभागे दक्षिणः पाद उत्तमः ॥ ४६३ ॥

वामांघ्रिच्छन्दयुक्तेन पृष्ठे मध्यगुणान्वित ।
निम्नदेशे कृतन्यासा नर्त्तकी नटरूपिणी ॥ ४६४ ॥

शुकसारिका––

वामभागे शिरश्चैव त्रिकोणालम्बितः करः ।
तत्सम्मुखे वामभुजा कुचदेशे सुशोभन ॥ ४६५ ॥

दक्षिणं किञ्चिदूर्ध्वे च दक्षिणत्रिभुजावधि ।
पक्षिणो विविधाः कार्याः करे च शुकसारिकाः ॥ ४६६ ॥

मध्यबिन्दौ तथा नाभि तिर्यक् च चरणद्वयम् ।
वामे दण्डं सुरम्यं च भित्तिदेशे मनोरमे ॥ ४६७ ॥

तत्पार्श्वे दक्षिणं पादं लम्बाकारेण दक्षिण ।
एषा कन्या सुविख्याता विदिता शुकसारिका ॥ ४६८ ॥

नूपुरपादिका——

दक्षिंणांगी सदा रम्या मध्यरेखान्तरस्थिता ।
वामत्रिभुजरेखायां करे वामे विलम्बिता ॥ ४६९ ॥

पूर्ववद् दक्षिणकरे कलिकावरधारिणी ।
अधोदेशो द्वयोर्मध्ये दक्षिणे कुञ्चिते तथा ॥ ४७० ॥

दक्षजानुस्तथा निम्ने प्रथमप्रस्थस्पर्शिणी ।
पाददंडं तथा कुर्यात् तिर्यक् वामे च पार्श्वक ॥ ४७१ ॥

वामं करं यदा कुर्यात् तदा नूपुरमालिका ।
कराग्रं नूपुरान्विते ।
वामांघ्रिलम्बितो निम्ने मध्यरेखावलम्बने ॥ ४७२ ॥

मर्दला——

किञ्चित् तिर्यक् शिरोदेशे वामरेखान्तरे तथा ।
मध्यरेखान्तरे वक्षः वामबाहुर्विचक्षणैः ॥ ४७३ ॥

स्कन्धदेशे च वामांशे त्रिभुजबाहुस्पर्शिते ।
तदा रम्यो भुजश्चैव मध्यबाहुसमानतः ।
मध्यबाहुसुरेखायां मर्दलं दिव्यशोभितम् ॥ ४७४ ॥

मध्यबाहुं तदा प्रस्थे दिव्यं खोदेच्च मर्दलम् ।
दक्षिणबाहुस्तथा पृष्ठे दक्षिणत्रिभुजावधि ।
वामपादान्तभागः च पादभूमिं समाश्रितः ॥ ४७५ ॥

दक्षिणपादश्च तत्स्थाने मध्यरेखान्तवर्त्तिनि ।
एषा हि मर्दला श्रेष्ठा उन्मत्ता वादने तथा ॥ ४७६ ॥

करोभयेन संयुक्तस्ताल आनन्ददायकः ।
एताः षोडश कन्याः स्युः शिल्पागारविमण्डिताः ॥ ४७७ ॥

भद्रे रेखे तथा पागे सर्वत्र जनमोहिनी ।
नानालंकारसंयुक्तान् कारयेत् रमणीगणान् ॥ ४७८ ॥

केयूरहारान् दिव्यांश्च कुंडले कटकानि च ।
सर्वभूषणभूषाढयां सर्वलक्षणसंयुताम ॥ ४७९ ॥

नारीबन्धः सदा रम्यः शिखरे च विशेषतः ।
एतेन विधिना कार्यं गवाक्षादि मनोरमम् ॥ ४८० ॥

एवं विध्यनुसारेण गवाक्षं मंडयेत् सुधीः ।
करणीया तथा भित्तिः सर्वलक्षणसंयुता ।
सर्वाङ्गेचान्यकर्माणि समभावेन कारयेत् ॥ ४८१ ॥

लहराभागः—

अन्ते समान्वये स्थाने भित्तिदेशान्तरे तथाशृणुष्वात्र ।
प्रवक्ष्यामि भेदच्छेदादिनिर्णयम् ॥ ४८२ ॥

गर्भस्थापनकर्माणि विचित्रलहराकृतिम् ।
मुखशालां च भित्तेश्च वेधञ्च द्विगुणीकृतम् ॥ ४८३ ॥
ऊर्ध्वमंडलम् ।

त्रिभागं योजयेत् तत्र आद्यभागे च पट्टिकाम्
त्रिभागे यः कृतो भागः सः स्याच्चैव द्विखंडितः ॥ ४८४ ॥

द्विभागीकृत यदूर्ध्वे तच्छिलाखण्डिताकृतेः ।
द्विभागो वाडवेधे च अन्तर्देशेन दर्शयेत् ।
वर्धयेत् ।

सा ख्याता लहरी पट्टी प्रथमं लहरी तथा ॥ ४८५ ॥
लहरातलम् ।

शिलायाः पट्टिदेशार्थं खण्डैकं सुमनोहरम् ।
आड़ो वा दंडभागैकः कथिता आद्यवर्त्तिका ॥ ४८६ ॥
वेधस्य द्विगुणे ऊर्ध्वे भागैकं आद्यबंधना ॥ ४८६ ॥

पट्टिस्थले यथाकारे लतागुल्मादयः पुनः ।
नानाकारे बल्लयश्च कुर्याच्च कुसुमावलिम ॥ ४८७ ॥

ऊर्ध्ववाड इति ख्यातः अथवा वास्तुबंधना ।
त्रिभागकथिता मुख्या पट्टीपत्रगवाक्षकाः ॥ ४८८ ॥

लौकिके कथिता फेणी वाडान्तलहरीतला ।
तदूर्ध्वे चार्धभागेन तिर्यगाकृतिमेघना ॥ ४८९ ॥

पद्मपत्रसमं पत्रं कारयेदुत्तमं सुधीः ।
कूर्मपृष्टाकृतिर्भूमिः किञ्चित् न्यूनावधिस्तथा ॥ ४९० ॥

ऊर्ध्वभागश्च वेधश्च पट्टिक्षेत्रानुरूपतः ।
पट्ट्याफेण्या च संयुक्तं फलकं पक्षभाजितम ॥ ४९१ ॥



एन ४१३३–१५अ

तत् तदनुसारेण गवाक्षभित्तिरुच्यते ।
लम्बाकारे तथा प्रस्थे यत् क्षेत्रे सकलेपि च ॥ ४९२ ॥
चतुर्दिशि मनोहरे ।

प्रस्थच्छेदानुसारेण द्विभागो दैर्ध्यभावतः ।
एकभागस्तथा जालिः लौकिके कथितापि च ॥ ४९३ ॥

गवाक्षिका इति ख्याता विश्वकर्मानुसारतः ।
तत् क्षेत्रं सुस्थिरे भाग अंकिते पंचधा स्मृता ॥ ४९४ ॥

कदाचित् सप्तधा मुख्या दैर्ध्ये प्रस्थे तथैव च ।
तदन्ते खोदनं कार्यं प्रथमापंक्तिमुख्यतः ॥ ४९५ ॥

यद्यपि गौरहरा आद्ये उपर्य्युपरिखोदनम् ।
द्वितीयपंक्तिराद्ये च करणीया सुपट्टिका ॥ ४९६ ॥

एतदनुक्रमपातेन कुर्यात् जालीं मनोरमाम् ।
जालीभागस्य पार्श्वेण भारकेन्द्राधिपागणाः ॥ ४९७ ॥
भारभैरवः ।

गर्भदेशैकभागेन केवलपट्टिमुत्तमाम् ।
निम्नद्विभागसंयुक्ते न्यूनपट्टि समाचरेत् ॥ ४९७ ॥

एतेन क्रमभेदेन ऊर्ध्वभित्त्यंशनिर्णयः ।
भित्तिकर्म इति ख्यातं वदिष्यामि यथा तथा ॥ ४९८ ॥

एवं भेदे तथा कर्म क्रमभेदे तथा गुणाः ।
सम्प्रवक्ष्यामि संक्षेपान्निष्फलं शिल्पिभिर्विना ॥ ४९९ ॥

शास्त्रानुसारतः कर्म यदि स्यात् सर्वसम्मतम् ।
विना प्रत्यक्षज्ञानेन जटिला जायते क्रिया ॥ ५०० ॥

शृणु शिष्यप्रबोधार्थं मुखशालाश्च मंडपाः ।
कर्मणा केन कर्त्तव्याः शाला ऊर्ध्वे तथैव च ॥ ५०१ ॥

लहराकृति शाला सा कुञ्चिता कलसावधि ।
प्रथमं लहरा भूमिः कर्त्तव्या* सावधानतः ॥ ५०२ ॥
* निर्णयेत् ।

यथाकारस्तथा भित्तिः ऊर्ध्वे चैव तदा क्रमे ।
द्विगुणाकल्पिते ।
पंचभागैकभागेन वर्धयेत् प्रस्तरं तथा ॥ ५०३ ॥

विश्वभागा कृता रेखा गर्भदेशे बलाकृतौ ।
अपरभागसम्पन्ने प्रस्तरस्य मुखे तथा ॥ ५०४ ॥
संमुखभागसंयुक्ते प्रस्तरो विस्तृताकृतिः ॥ ५०४ ॥

तदाकारा तदा शिला वेदभागैकभाजिता ।
वेधस्तदनुसारेण जायते सम्मुखादपि ॥ ५०५ ॥

एतद्भागे विचित्रे च गुम्फनाकृतिकर्मणि ।
राजक्रियानुबन्धानां नाम तत्र तु जायत ॥ ५०६ ॥
ऊर्ध्वदेशे गुंडिकां च विचित्राकृति खोदयेत् ।
निम्ने झरावलीमध्ये राजवंधः स कथ्यते ॥ ५०६ ॥

राज्ञाञ्च राजपुत्राणां सचिवानां पुरोधसाम् ।
सर्वेशां जनभावेन चित्राखोदनप्रक्रिया ॥ ५०७ ॥
वंधरूपेण ।

बलाधिवेष्टितो राजा संगिनीवेष्टितो प्रियः ।
सखानुवेष्टितो मंत्री चारानुवेष्टिता सभा ॥ ५०८ ॥

रथहस्तितुरंगानां चतुरंगबलादयः ।
नानाकारे कृते रम्ये राजबन्ध इति श्रुतः ॥ ५०९ ॥

क्षीणाकारे चतुःपार्श्वे पट्टीं क्षीणां तथाचरेत् ।
मध्यदेशे सुरम्ये च खोदनं क्रियते तथा ॥ ५१० ॥

यद्यपि शास्त्रनिर्देशो मुख्यः प्रासादकर्मणि ।
*तथापि राजबन्धेन कारयेन्मूर्त्तिमुत्तमाम ॥ ५११ ॥
*शिल्पी *मनोज्ञं ।

देशः कालस्तथा पात्रमेतद् ज्ञानानुसारतः ।
मूर्त्तिः नानाविधा रम्या करणीया मनोरमा ॥ ५१२ ॥

तदूर्ध्वे समभावेन पातयेत् फलकावलीः ।
राजबन्धसमा शिला वर्धितैकसभागकैः ॥ ५१३ ॥
राजबंधे यथा वेधः त्रिभागैकं च वर्द्धयेत् ॥ ५१३ ॥

समूहावाणभागांश्च शृणु न्यासविधानतः ।
पंचमा भागभागस्य द्विभागसम्मुखादपि ॥ ५१४ ॥
शिलां विस्ताररूपेण वाणभागेन भाजयेत् ।
भागद्वयं तथा चापे त्रिभागं संमुखादपि ॥ ५१४ ॥

एको भागो गर्भदेशे सर्वदा लहराकृतिः ।
स्थापनीया शिला सा तु अग्रे द्विवलिसंयुता ॥ ५१५ ॥

निम्ने तु मणिबन्धाश्च ऊर्ध्वे कुंभी तथैव च ।
मणिबन्धच्छेदमालां वर्त्तुलाकारखण्डिताम् ॥ ५१६ ॥

कुंभीदेशे व्यासरूपे पंकजपत्रं च छेदयेत् ।
अथवा दन्तुरिका च रम्यतोरणमालिका ॥ ५१७ ॥

एते तु प्रथमा भेदा गर्भदेशांगनिर्णये ।
तदूर्ध्वे पाटपातञ्च प्रथमावरणं तथा ॥ ५१८ ॥

नीत्वा गर्भप्रस्थभागं वाणेन *भाजयेत् ततः ।
*वाणरेखेन ।
मध्ये भागद्वयं त्याज्यं अपरः पाटनिर्णयः ॥ ५१९ ॥

तत्पाटदृढशिलायां न च नष्टं कीटादपि ।
अक्षुण्णे प्रस्तरे कुर्याद्यत्नतः तिर्य्यगाकृतिम ॥ ५२० ॥

तदाकृतिः तदा पाट इषुभेदेन भाजितः ।
कल्पितो भाग एतेषां केवलं धारणार्थकम् ॥ ५२१ ॥
शालानुसारतः पाटः वाणभेदः स जायते ।
स्थानभेदानुसारेण केवलं धारणार्थकम् ॥ ५२१ ॥

अग्रभागो वर्त्तुलश्च सुरम्यतिर्य्यगाकृतिः ।
समं च चतुरस्रञ्च विषमे वर्गक्षेत्रके ॥ ५२२ ॥

कोणार्थे विषमशिलाः पार्श्वार्थे समभागिकाः ।
विषमं समम् ।
कुंभीदेशे चाग्रभागे पाटानि स्थापयेद् दृढे ॥ ५२३ ॥

गर्भे दृढतमे दत्वा दारुकीलं तथा ध्रुवम् ।
तदन्ते चापक्षेत्राणि शृणु त्वं सावधानतः ॥ ५२४ ॥
तथा रुद्धं च शिलायां स्थापयेत् क्रमभेदतः ॥ ५२४ ॥

कल्पितभागशेषस्य चापक्षेत्रे स्थलं तथा ।
दीर्घे सुकृत* शिलायां लम्बाकारे मनोहर ॥ ५२५ ॥
*सुदृढ ।

पट्टिकां वर्त्तुलाकारे कारयेत् शिल्पिपुंगवः ।
वल्लभी वा पिच्छिले वा अग्रदेशे सुनिर्मले ॥ ५२६ ॥
मतानुसारतः ।

पट्टिक्षेत्रे यथा बाडे वसन्ते चातिशोभना ।
पृष्टभागस्तथा दृढं बल्याकारेण गुठनम् ।. ५२७ ॥

अपरं *छेदयेत् शिल्पी दन्तुरिका कृते दृढे ।
तद्भागस्थापनं कुर्यात् पाटप्रान्ते दृढे तथा ॥ ५२८ ॥
*अग्रभागम् ।

अन्यपृष्ठाकृतौ कल्या भिन्नाकारे च पातनम् ।
पृष्टदेशः तथा सौम्ये पाषाणे चोत्तमे कृतः ॥ ५२९ ॥

पश्चात् भागे दन्तुरिका शुकमुखाकृतिः शिला ।
पाटमारुह्य च शिलां निम्ने च अवरोधयेत् ॥ ५३० ॥

तत्प्रतिभागसान्निध्ये चार्धगर्भकखोदनम् ।
तदन्ते वायव्यस्थाने* कुम्भयार्युगलं तथा ॥ ५३१ ॥
*वायुमार्गे ।

मण्डयेत् निपुणं शिल्पी वायव्यबन्धमाचरेत् ।
यत् प्रस्थलहरी तस्य चतुर्भागस्तु सम्बलः ॥ ५३२ ॥
लहराक्षेत्रं चतुर्भगैकभागवत् ।

अथवा राजबन्धस्य द्विगुणव्यासमाचरेत् ।
एतत्स्थानं महादिव्यं पढ़िनाम्ना तदुच्यते ॥ ५३३ ॥

मिथुनकुम्भबन्धाश्च शिल्पशास्त्रानुसारतः ।
विषमं चतुरस्रं च समभागेन भाजयेत् ॥ ५३४ ॥

सम्भवति च या संख्या तत्संख्यं निम्नगर्भकम् ।
तत्संख्यायाः तदाकारे धारणं कारयेद् दृढे ॥ ५३५ ॥

पुष्पाकारे तथा कुम्भः अथवा बातसंग्रही ।
जालिमाचरेत् ।
कुम्भमिथुनबन्धश्च सर्वाङ्गाभरणं तथा ॥ ५३६ ॥

विनालंकरणं हीनः केवलं वातसंग्रही ।
वातसंग्रही च स ख्यातः पुष्पपृष्ठाकृतौ सदा ॥ ५३७ ॥

इष्टदेवानुकूल्येन शोभनं मातृमन्दिरम् ।
प्रसिद्धः कुम्भमिथुनभेदः श्रेष्ठो न संशयः ॥ ५३८ ॥

शृणु भेदांश्च कुंभानां मिथुनादिचतुष्टयम् ।
पूर्णकुम्भः पर्णकुम्भः कुम्भो मकरमालिकः ॥ ५३९ ॥

एते च वेदभेदा हि जायन्ते कुंभकर्मणि ।
यथाकारे यथाक्षेत्रे क्रियते तच्च कर्मणि ॥ ५४० ॥

पूर्णकुम्भः——

महाकालफलाकारे फलके मध्यमावधि ।
ऊर्ध्वदेशे द्विभागश्च द्विवलीकरणं महत् ॥ ५४१ ॥

पूर्णकुम्भ इति ख्यातः शिखरे सुमनोहरे ।

पर्णकुम्भः——

समूहचतुरस्रं च क्षेत्रे मध्यरेखान्वये ॥ ५४२ ॥

कल्पितमध्यरेखायां लम्बभागे तत्रोपरि ।
खोदयेत् प्रथमं छेदं कुम्भमध्यान्तभागयोः ॥ ५४३ ॥

कल्पितमध्यरेखायाम् ऋतुभागे च दैर्घ्यतः ।
खोदयेत् पत्रछेदं च कुंभमध्ये विशेषतः ॥ ५४३ ॥

प्रस्थाकारे तथा बाणे ऋतुभागदिकल्पितम् ।
प्रथमे कुम्भपट्टी च द्वितीये पुष्करं तथा ॥ ५४४ ॥

तृतीये कुम्भशीर्षञ्च चतुर्थे क्षीणरूपकम् ।
क्षीणपट्टिका ।
तन्निम्ने कुम्भपात्रञ्च षष्ठे पादस्तथैव च ॥ ५४५ ॥

मध्यरेखाश्रिता दिव्ये चम्पकः कुम्भजाकृतिः ।

मकरमालिनी——

समे वा विषमे क्षेत्रे मध्यरेखा समन्वये ॥ ५४६ ॥

विपरीतमुखाकारे कारयेन् मकरद्वयम् ।
एवमेतान् कुम्भभेदान् स्थापयेत् शिल्पिपुङ्गवः ॥ ५४७ ॥

मिथुनबन्धनिर्णयः——

शृणु मिथुनबन्धांश्च कस्मिन् यंत्रादिनिर्णयः ।
नाना मिथुनबन्धा हि कामशास्त्रानुसारतः ॥ ५४८ ॥

मुख्या हि केवलं केलिर्न पातो न च संगमः ।
केलिः बहुविधा शास्त्रे केवलं क्रीडाभाविता ॥ ५४९ ॥

तद्रूपं स्थापयेत् बन्धे भागानुसारिणिं प्रति ।
चापशीला तथाक्रमे ।
तदूर्ध्वे लम्बभागे च निम्ने बल्लिद्वयन्तथा ॥ ५५० ॥

करणीया तथा रम्ये निम्नगा कलिकावलिः ।
लौकिके कथिता झारा कलिका लम्बिकाथवा ॥ ५५१ ॥

तदूर्ध्वे पूर्ववत् बन्धे द्विगुणां बलिमाचरेत् ।
अग्रे पश्चात् तथा क्षेत्रे संकीर्णे नृपमंडलम् ॥ ५५२ ॥

पुनस्तदूर्ध्वदेशे च किञ्चित् क्षुद्राकृतौ सदा ।
कारयेच्चैव तत् स्थाने कुम्भीबन्धं यथाक्रमात् ॥ ५५३ ॥

पाटपातनविधिः––

सर्वान्ते पातयेत् पाटं पूर्वभागानुसारतः ।
केन्द्रगर्भ इति ख्यातं कर्म कार्यं शुभक्षणे ॥ ५५४ ॥

पाटः स बृहदाकारो धारिणी मुद्रकं यथा ।
एषा हि मुखशालायाः गर्भसंचारिणी क्रिया ॥ ५५५ ॥

छिद्रवज्रहीना शिला न च मिश्रणशोधनम् ।
घर्षयेद् रजसा युक्ता दृढा भवति सर्वदा ॥ ५५६ ॥

संक्षेपे शिल्पशास्त्राणां बोधार्थं वर्णयाम्यहम् ।
सुतत्वतः ।
नानाग्रन्थे नानाभेदाः मात्स्ये चाग्नेय एव च ॥ ५५७ ॥

शुक्राचार्यकृते ग्रंथे विशवकर्मानुशासने ।
तद्ग्रन्थनीतिभेदेन देशभेदे तथा शुभे ॥ ५५८ ॥

वाणीभेदेन देशभेदे पृथक् सदा ।
कौलाचारेतिशास्त्रं हि सारिणी अनुसारिणी ।
कौलाचारमते शिल्पमंशुकागमसन्निभम् ॥ ५५९ ॥

कौलाचारगतं शास्त्रं वामाचारानुसारतः ।
कौलाचार इति ख्यातः अंशुकागमवर्णितः ॥ ५५९ ॥

सौधिकागममार्गेण प्रकाशो द्विविधाबलि ।
मुखशाला तथाद्ये च शिखराः पक्षलम्बिताः ॥ ५६० ॥

मुखशाला तथा श्रेष्ठं शिखरं बहुभेदतः ।
एष क्रमद्वये भेदो मुख्यसूत्रं तु जायते ।
तदनुसारतो शिल्पविद्या देशानुसारिणी ॥ ५६१ ॥

प्रवक्ष्यामि द्वितीये तु प्रकाशे शिल्पनिर्णयम् ।
शिल्पप्रकाशग्रन्थोयं शिल्पविद्याविभूषितः ॥ ५६२ ॥

शिल्पागमस्य लक्षणम् ।
भागच्छेदगुणभेदो यंत्रादिनिर्णयस्तथा ।
एते हि क्रमभेदाः स्युः शिल्पशास्त्रस्य लक्षणम् ॥ ५६३ ॥

शिष्यप्रशिष्यवोधार्थ ग्रन्थश्लोकानुबंधतः ।
मुखशालाङ्गभेदाभ्यां शिखरानिर्णयस्तथा ॥ ५६४ ॥

शिल्पांगकर्मभेदश्च अनुभेदस्तथैव च ।

ग्रंथकारपरिचयः——

मुशली भार्गवीकन्या स्रुता सागरसन्निधिम् ॥ ५६५ ॥

सागराभिमुखं गता ।
तद्भूमिसन्निधौ ग्रामस्तान्त्रिककुलसङकुलः ।
उद्गातृवंशसम्भूत अधुना धौमिमंडले ॥ ५६६ ॥

नृपतिः सेवितः सर्वैः पितृपितामहादिभिः ।
पिता कुलेश्वरोऽस्माकं माता संज्ञामयी तथा ॥ ५६७ ॥

रामचन्द्रो द्विजश्रेष्ठः कौलाचारपरायणः ।
श्रीनीलशिखरे मध्ये दक्षिणकालिकावृते ॥ ५६८ ॥

इष्टमूर्त्तिर्जगन्नाथः सर्वसिद्धिप्रदायकः ।
तस्यानुग्रहमात्रेण ग्रन्थ आद्यः प्रकाशितः ॥ ५६८ ॥

सम्पूर्णो जायते दिव्यो मुखाशालांगनिर्णयः ।
इति श्री कौलाचार परायण भट्टारक रामचन्द्र
महापात्रोद्गातृशिल्पिप्रवरेण विरचिते शिल्पप्रकाशे
प्रथमः प्रकाशः ।

## द्वितीय प्रकाशः

विमानभागनिर्णय :

इष्टं स्मरामि भवबन्धविमोचनायै
कष्टार्तिमोक्षणकरोत्पललोचनायै ।
वक्ष्यामि शिष्यसुधीवृन्दविबोधनार्थं
श्रीविग्रहावसतिश्रेष्ठविमानभागम् ॥ १ ॥

यद्गृहे स्थापितं पीठं तत् स्थानं पिण्डिकोत्तमा ।
तद् वर्गमन्दिरं ख्यातं विमानं कथ्यते तथा ॥ २ ॥

प्रासादभेदा :—

नानाभेदश्च भागोऽसौ नानाशास्त्रानुसारतः ।
मञ्जुश्री रत्नसारश्च मृदंगा चैकभागिका ॥ ३ ॥

वसुश्री रेखभावेन* महामेरुस्तथैव च ।
कैलाशशिखरे रम्ये वेतालाष्टदशांशका : ॥ ४ ॥

* रथसंयुक्ते

विमानरथयुक्तञ्च गृहभागरथांगकः ।
सुवर्णकूटप्रासादमंडना अहिमण्डना ॥ ५ ॥

* महिमंडना

विमानमालिनी श्रेष्ठा सिंहशिखरशोभिता ।
एते तु मुख्यभेदाः स्युः विमानकर्मकौशलम् ॥ ६ ॥

यद्यपि लौकिके भिन्ननामानुवर्त्तिमन्दिराः ।
सर्वाङ्गभूषणे श्रेष्ठो द्वादशो मुख्य उच्यते ॥ ७ ॥

शृणु तत् सर्वभेदानां सूक्ष्मो लक्षणसंग्रहः ।
भेदक्रमानुसारेण विश्वकर्मानुशासनात् ॥ ८ ॥

मञ्जुश्री :—

सर्वतोभद्र यंत्रेण कूर्मपीठान्तरे दृढ़े ।
पंचकर्मादिकं बाड़ अर्धभागैकबन्धना ॥ ९ ॥

बाड़प्रांते बन्धना च मिलिते शिखरादयः ।
निशार्धे कुञ्चिता निशा तदन्ते जांघखोदनम् ॥ १० ॥

जांघोर्ध्वे शिखरं तत्र चतुःपार्श्वे मनोहरे ।
अग्रे पश्चाद् द्वयोः पार्श्वे शिखरं महदाचरेत् ।। ११ ।।

तदूर्ध्वे पंच कर्म च* अनर्थे शिखरं यथा ।
अमलक्यादियुक्तेन मञ्जुश्री मञ्जुलं महत् ।। १२ ।।

* रेखकर्मागराहानर्थं च कोणकम्

रत्नसार :—

भद्रकारे तथा* शाला नानालंकार* शोभिता ।
शिखरैर्मण्डिता शाला सिंहकन्याविमण्डिता ।। १३ ।।

* समभद्राकृति * नानापागं

निम्नांगं यावत् तत्र बन्धनाबन्धमुत्तमम ।
गर्भस्थानञ्च द्विगुणं* तद्रूपाः शिखरादयः ।। १४ ।।

निम्नांग तत् सरूपेण यावद्भित्ति च बंधना ।

* द्विगुणमुच्चं

रत्नसारविमानांशे कोणका दशभेदकाः ।
अनर्थमण्डिता दिव्ये राहानुराहके तथा ।। १५ ।।

शिखरं विहितं निम्ने सर्वदा नागभूषणम् * ।

* पागभूषणम्

सिंहपीठासना भित्तौ आलम्बमालिका दृढा ।। १६ ।।

मृदंगा :—

वीथिपीठोपरि खुरा कोणकादि यथाक्रमे ।
अन्ते जांघप्रदेशश्च द्वादश-भागसन्निभः ।। १७ ।।

प्रतिभागे तथा निशा* निशाकारे गृहं तथा ।
वज्रमस्तकमाला च सर्वांगे राहदेशिके ।। १८ ।।

* भागे तथा वासगृह

ऊर्ध्ववाड़वेदभागे पीठाकारे मनोहरे ।
त्रिभाग* गर्भदेशञ्च मृदंगाकृति सर्वदा ।। १९ ।।

* त्रिगुण

ऊर्ध्वे अमलकी क्षीणे कोणका सुमनाकृतिः ।
अर्धखण्डितपागानां नानालंकारशोभिता ।। २० ।।

वसुश्री :—

ग्रहांगभेदप्रासादखुराकारपीठोपरि ।
कोणकादि यथा जांघ कणि फेणि वसन्तकम् ॥ २१ ॥

गर्भस्थाने रथश्चैव जायते दिगसंख्यक: ।
शिखरविहीना पार्श्वे वसुश्रीः कथिता सदा ॥ २२ ॥

महामेरू :—

शृणु त्वमपरो भेदो स महामेरुसंज्ञक: ।
एकाष्टोत्तरभागे च अंशके भाग योजयेत् ॥ २३ ॥

पद्मपीठसमक्षेत्रं पंचकर्मादिशोभितम् ।
जांघबन्धनायुक्तेन* भित्तिस्तत्र तु जायते ॥ २४ ॥

* वंधना युग्मं

रथकं* गर्भभागे तु शिखरं पंच सागरा: ।

* मुद्रक

प्रतिशिखरक्षेत्रे च भूमिव्यूह* ससख्यक: ॥ २५ ॥

* ग्रह

अनर्थपक्षयुक्तेन शिखरं रथकं तथा ।
अमलक्यादिसंयुक्ते सिंहकन्या मनोरमे ॥ २६ ॥

अलसातत्रकन्या स्याद् भैरवपार्श्वे सर्वदा ।
स्थापयेतद् मूर्ति गर्भेण अमलक्याऽभवधारयो ॥ २७ ॥

राहा क्षेत्रे तथा रम्ये सिंहञ्च शिखरं बृहत् ।
प्रतिराहानुभागेन शिखरा: पक्षसंख्यका: ॥ २८ ॥

* निम्ने च रथकं तथा

एवं कर्मे सदा दृढ़े नानामूर्त्तिसमन्वये ।
महामेरुप्रासादे च मण्डयेत् शिल्पिपुंगव: ॥ २९ ॥

कैलाश :—

शृणु त्वं भेदकैलाशशिखरं सर्वसुन्दरम् ।
नानाक्षेत्रे तथा भेदे रथं तत्र मनोहरम् ॥ ३० ॥

भद्रपीठोत्तमे क्षेत्रे पंचकर्मादयस्तथा ।
जांघबन्धनायुक्तेन भित्तिशास्त्रानुसारत: ॥ ३१ ॥

वर्धिता चार्धभागेन शिखरं भूमि जायते ।
मध्य बन्धना संकीर्णे पंचरेखादिसन्निभम्* ॥ ३२ ॥

* पंचभाग समन्वये

इषुभागादियुक्तेन प्रतिकोणादपि तथा ।
कोणके शिखरे वापि अनर्थयुगभागिका* ॥ ३३ ॥

* युग संख्यकम्

उपरथादियुक्तेन वाणभागसमन्वये ।
विंशभूमौ तथा राहा वसु भागेनभाजितम् ॥ ३४ ॥

कोणकं वसुभागेन प्रतिभागे रथत्रयम्* ।

* द्वयम्

स्थले त्रिंशोत्तरे षष्ठभागे मुख्यविचारणा* ॥ ३५ ॥

* दिक्रपाल बंध कथ्यते

शिखरवाड़भागेन निशापीठोर्ध जायते ।
निशान्ते मुद्रकस्थाने वज्रमस्तकशोभनम् ॥ ३६ ॥

कोणके कुंचिता रेखा अनुराह विलोमके ।
शिखरन्न्यूनभागेन आद्ये ग्रहसंख्यके* ॥ ३७ ॥

* रथकं न्यूनरूपेण अर्धगृहे च कारयेत् ।

भागेन वर्त्तते भूमि पट्टि कणि यथाक्रमे* ।
आद्य पट्टि तथा अन्ते पट्टिमध्य कणि युगे* ॥ ३८ ॥

* प्रति भागेन भूम्यन्ते पट्टि फेणि यथाक्रमे ।

* फेणी चतुष्टयम्

तदन्ते शिखरं रम्यं सर्वांगसुन्दराकृति ।
तदूर्ध्वेऽनर्थदेशं* च भूमिरिन्द्रियसंख्यकम् ॥ ३९ ॥

* ऊर्ध्वदेशे

ऊर्ध्वदेशे समान्ते च जायते कर्णिकावधि* ।

* चूलिकावधि

अनर्थे बाणभागेन फेणि फुलिगृहादयः ॥ ४० ॥

प्रतिपार्श्वे तथा न्यासेत् पूर्वे पृष्ठं च शिखरा ।
उदीच्यां दिशि भागेन पुनः अवाच संस्थिते* ॥ ४१ ॥

* उत्तरे दक्षिणे भावे निशागर्भ विधानतः

तत्तुल्य वज्र मुण्डञ्च सिंहादि* शोभितं तथा ।
कोणके वसुभागेन फेणिका कणिकादयः ॥ ४२ ॥

* राहेन

ऊर्ध्वदेशे तथा दिव्ये गजराजसुशोभितम् ।
अमलक्यादियुक्तेन कैलाशगर्भकं तथा ॥ ४३ ॥

जायते सर्वभागेन नानाकर्म रथान्तरे ।
एवं रथं तथा वाणं समुद्रग्रहमेव तु ॥ ४४ ॥

वैताल :——

वैतालविषमक्षेत्रे विषमं चतुरस्रसम् ।
तत्स्थाने सिंह कूर्मं वा पीठे रम्ये दृढ़े तथा ॥ ४५ ॥

विषमकणिकाकारे द्वितीया पीठवर्तिनी ।

* विषम वीथि पीठान्ते पंचकर्म समानतः

ततः खान्दी गुणाकारे चतुःपार्श्वेण खोदयेत् ॥ ४६ ॥

तत् परं विहिता भित्तिः इषुभागैककेवलम् ।
भित्तौ रम्यो विग्रहश्च विग्रहबन्ध उच्यते ॥ ४७ ॥

तदूर्ध्वे रेखकर्मञ्च अपरा वाडसन्निधौ* ।

* बाडोर्ध्वे प्रस्थरूपतः

रेखाकारे* तदा. रेखचतुः पार्श्वे यथाक्रमे ॥ ४८ ॥

* छेदाकारे

तदर्धभाग अंशेन ऊर्ध्वभित्तिं तदुत्तरे ।
वज्रमस्तक तत् स्थाने नानाकर्मसमाश्रये ॥ ४९ ॥

अन्ते च द्विवलिरेखप्रस्थाकारे मनोहरे ।
छेदाकृतिः तथा खान्दी किञ्चिन्न्यूनतमे तथा ॥ ५० ॥

कणि** सदृशतत्स्थाने पट्टिकण्याकृतेऽधिकः ।

* फेणी* गर्तः

एतानि भित्तिकर्माणि बैतालभूरवाकृतौ * ॥ ५१ ॥

* वैभवाकृतिम्

शृणु गर्भ-रेख-कर्म प्रस्थाकारे विशेषतः ।
द्विभागं वेदभागं वा भित्तिस्तम्भाकृतिर्बलिः ॥ ५२ ॥

प्रतिवेदा तथा संख्या वसन्तपट्टिकादयः ।
प्रतिकार्यान्तरे खान्दी दैर्घ्ये पूर्वे च पश्चिमे ॥ ५३ ॥

प्रस्थद्वये तथा स्थाने सुरम्यं वज्रमस्तकम् ।
नानामूर्तिः तथा प्रस्थे वर्त्तुलाकार क्षेत्रके ॥ ५४ ॥

नानामूर्त्ति सह अग्रे वर्धितं तोरणकृते ॥ ५४ ॥

केवलं युगकोणा सा कोणकं कर्म उच्यते ।
प्रतिवेदांग अन्ते च अमलक्या विधीयते ॥ ५५ ॥

तदूर्ध्वे भित्ति यत् भागे तलाकारे च वैतालिकम् ।
कूर्मपृष्ठाकृतौ ताल* आदितालः स उच्ते ॥ ५६ ॥

* चाल

केवलं कीर्तिमूखाद्याः चूलाकारे मनोहरे ।
तद् विश्वभागसन्निभं* यावत् कंठस्थलावधि ॥ ५७ ॥

* छेदं च ।

तदूर्ध्वे समभागेन द्वितीय-ताल सुदृढ़े ।
यदा काले तदा पीठं बाणभागेन भाजितम् ॥ ५८ ॥

ऊर्ध्वदेशे वृत्ताकारे पक्षभागेन वर्त्तुले ।
तत्ताल अन्तभागे च छेदपार्श्वे त्रिभागिकम् ॥ ५९ ॥

विनामूर्ति विना छेदं शीर्षभागे विधीयते ।
केवलच्छेदभेदेन गर्भकं सम्मुखावधि ॥ ६० ॥

बृहदाकाररूपेण वज्रमस्तकस्थापनम् ।
गम्बुजाकृतिभागेन छेदाकारे विस्वंऽशंके ॥ ६१ ॥

खोदयेत् शिवमूर्त्तिं च भैरवं तोरणान्तरे ।
नाटाम्बर इति मूर्तिः ख्यात ऊर्ध्वस्थलोत्तमे ॥ ६२ ॥

शीर्षं च खर्परं भागपिच्छिलाकृति सर्वदा ।
अन्ते शीर्षोत्तमे न्यासेत् क्षुद्रं कुंभं तथैव च ॥ ६३ ॥

एकखुम्बी द्वयोः सिंहः खुम्बर्धे कलसं दृढ़म् ।
कुम्भाकारे कलियुक्ते मध्यदेशे मनोहरे ॥ ६४ ॥

* वलि

तद्वलिच्छेदयुक्ते च कारयेत् शिल्पिपुङ्गवः ।
सिंहस्थाने तथा मुद्रे वज्राकारे च कुम्भिका* ।। ६५ ।।

* भद्रपीठोर्ध्वे कुम्भकम् ।

एवं प्रासादभेदा स्युः वैतालिका महत् तथा ।
मातृभेद एष प्रासाद तान्त्रिकः* सौध उच्यते ।। ६६ ।।

* कौल ।

नानाभागं तथा यंत्रं यदुक्तं सौधिकागमे ।
प्रसंगक्रमभेदेन वक्ष्यामि च तदुत्तरे ।। ६७ ।।
।

रथयुक्त :—

शृणु आद्यभेदकर्म यथाशास्त्रानुसारतः ।
नानाभेदानां तद्गर्भ रथस्यानुक्रमे तथा ।। ६८ ।।

भैरवयंत्रम् :—

शृणु त्वमाद्यं भैरवयंत्रमन्दिरम् ।
भैरवरुद्र गृहार्थे यंत्रसिद्धिप्रदायकम् ।। ६९ ।।

मध्ये कर्णिका तत् पार्श्वे वृत्तमष्टाब्जमंडलम् ।
शीर्षे च वर्त्तुलनागः पश्चिमे पृष्ठकुण्डली ।। ७० ।।

चतुर्द्वारं पुरं तत्र द्वारमध्ये भुजंगकम् ।
पुनः तद्रूपभागश्च चतुर्द्वारपुरावधि ।। ७१ ।।

प्रतिकोणे तथा न्याये रेखाकारेण कर्णिका ।
एतद् भैरवयंत्रञ्च शिवार्थं तु विधीयते ।। ७२ ।।

एतद्यंत्रानुसारेण कुर्यात् प्रासादमुत्तमम् ।
यंत्रविकल्पभेदेन कीर्तिः जायेत निष्फला ।। ७३ ।।

शृणु ततः पुरं भेदाःविध्याचरेत् सदा ।
वीथि पीठोपरि क्षेत्रं न कुर्यात् कोणकादिकम् ।। ७४ ।।

कोणकच्छेद भेदेन यंत्रं विकल जायते ।
तदाकारे भित्तिमध्ये अनर्थपाग केवलम् ।। ७५ ।।

पीठोपरि तथा न्याये* द्वारपार्श्वे च कीलकम् ।

* न्यसेत्

तत्स्थाने छेदभेदेन करणीयं सुकर्म च* ।। ७६ ।।

* अनर्थं कारयेत्तथा ।

दीर्घाकारे तथा खुरो वलाकारे च कुम्भकः ।
कूष्मांडाकृतिः स कुम्भःस्यात्दूर्ध्वे रेख* केवलम् ॥ ७७ ॥

* पीढ ।

किञ्चिद् वक्रं च तत्स्थाने त्रिरेखे* मूर्तिखोदनम् ।

* त्रिभागे ।

तदूर्ध्वे वेदभागेन* वसन्तकलिकाकृते ॥ ७८ ॥

* ऋतुभागेन ।

तदूर्ध्वे जांघरूपेण स्तम्भाकारे विमानिका ।
पट्टिः फेणिश्च पद्मं च तदूर्ध्वे वज्रमस्तकम् ॥ ७९ ॥

केवलं कीलकं क्षेत्रं राहपार्श्वे मनोहरे ।
करणीयं तथा पार्श्वे अनर्थभित्तिखोदनम् ॥ ८० ॥

पृष्ठे पार्श्वे यथाद्वारं तद्द्वारसन्निधौ निशा ।
केवलं समभेदेन स्तम्भो जंघाकृतिः महान् ॥ ८१ ॥

ऊर्ध्वे त्रिच्छेदयुक्तायां मुद्रकं समभागिकम् ।
नानामूर्तिः तथा स्थाने भैरवमूर्तिखोदनम् ॥ ८२ ॥

एते तु भित्तिभेदा स्युः अक्षुण्णा-मंडलस्तथा* ।

*अक्षुण्णा कोणका सह

तदूर्ध्वे करणीयञ्च गर्भकं सुमनोहरम् ॥ ८३ ॥

यंत्र रेखाकृते मुख्ये अलंकाराणि मण्डयेत् ।
कोणकं पंच भागेन प्रतिभागं त्रिभागकम् * ॥ ८४ ॥

* भूमित्रयम्

छेदगुणान्वये भागः स रेखभाग उच्यते ।
आरभ्य मूलमन्ते च* इषुसंख्यानुसारतः ॥ ८५ ॥

* भित्तिमारभ्य कण्ठान्तम्

आमलक्याकृतिशिलाः तत्स्थाने सन्नियोजयेत् ।
कोणकं पागपार्श्वान्ते राहगर्भे सुगर्भकम्* ॥ ८६ ॥

* अनर्थ रेख गर्भके

यद् भागकोणके मुख्ये तदर्धं गर्भकस्थलम्* ।
गर्भाकारे गुहा चापि पुष्पादि शोभितं तथा ॥ ८७ ॥
यथा कोणक प्रस्थे च तदर्द्धं रेख गर्भकम् ॥ ८७ ॥

* अर्द्धवृत्ताश्रिते

नर्तकी कामबन्धश्च गुहा क्षेत्रे मनोरमे ।
तत्पार्श्वेऽनर्थभागश्च द्विगुणं क्षेत्रमण्डलम् ॥ ८८ ॥

कोणकं यदि वाणं दिगस्तत्र* अनर्थकम् ।
प्रतिभागे गुणाकारे भैरवमूर्त्तिखोदनम् ॥ ८९ ॥

* विंशस्तत्र

भैरव भेदा :—

शृणु भैरवभेदांस्त्वं तंत्र शास्त्रानुसारत ।
असितांगः सितांगश्च एकांघ्रिः कालभैरवः ॥ ९० ॥

महाकालस्तथा अष्ट-भैरवम् खोदयेन् महत् ।
अन्ते कंठप्रदेशेन वेकिस्थाने च कोणके ॥ ९१ ॥
महाकालं च कालाग्नि वीरभद्रं वटुकं महत् ।
भैरवमष्टभेदं च प्रासादे मंडयेत् ध्रुवम् ॥ ९१ ॥

मण्डयेत् पशुराजञ्च विश्वभागानुसारतः ।
सिंहमूर्त्यन्तरे रम्ये यथा खर्परप्रस्तरे ॥ ९२ ॥
कोणकोपरि कण्ठे च पशुराजं सुमंडयेत् ।
विश्वांस गर्भदेशोर्ध्वे तथा खर्परप्रस्तरम् ॥ ९२ ॥

तत्प्रमाणे तदाकारे अमलक्याकृतौ दृढे ।
वर्त्तुलाकारक्षेत्रं च अच्छिद्रं मंडलं यथा ॥ ९३ ॥

मध्ये गर्भकबिन्दुं च प्रतिशाला समानतः ।*
एतेन क्रमभेदेन अमलक्या कृतं महत् ॥ ९४ ॥

* मध्ये गर्भके गर्तं च गर्भयंत्रं समानतः ।

अमलक्योर्ध्वे देशे च तदूर्ध्वे खर्पराकृतिः ।
पिण्डिका च चतुःक्षेत्रे* कलशः तत्र जायते ॥ ९५ ॥

* चतुरस्रं

एतेन कर्मभेदेन त्रिरथ गर्भकाकृति ।
निम्ने चतुर्दशश्चैव ऊर्ध्वे विंशचतुष्टयम् ॥ ९६ ॥

अनर्थवेदरूपेण पंचधा ऊर्ध्व मण्डलम् ।
सिंह-कण्याकृते पीठः कलशा बाडशोभने ॥ ९७ ॥

रथकं दिग्भागे तु सायका रथमुत्तमम् ।
पीठान्ते पंचकर्मस्तु निम्नजांघे मनोहरे ॥ ९८ ॥

ऊर्ध्वजांघे पुनर्दीर्घे बन्धनान्ते गृहादयः ।
अनर्थपुटिते कंठे अमलामुद्रकं तथा ॥ ९९ ॥

हेमकूटप्रासादः —

द्वाविंशभागयुक्तेन हेमकूटविधिं शृणु ।
सुप्त शिखरयुक्ताभ्यां प्रतिभागे मनोहरे ॥ १०० ॥

चतुर्विंशतिसंख्यायां शिखरं जायते तथा ।
चतुःपार्श्वे राहभागे वज्रमस्तकखोदनम् ॥ १०१ ॥

जांघादिपंचकर्माणि निम्नदेशेऽतिशोभनम् ।
खुरादिशोभिते मुख्ये पंचकर्म विधीयते ॥ १०२ ॥

केवलं ऊर्ध्वभागेन द्विभागत्रिकूटान्वितम् ।
दीर्घच्छेदादियुवक्तेन शिखरञ्च परान्वितम् ॥ १०३ ॥

खर्प्परकूटभागेन सिंहपार्श्वे चतुष्टये ।
तदूर्ध्वे हेमकूटाभ्यां चूडाकारे मनोहारे ॥ १०४ ॥

कलशद्वयभागेन सिंहादिशोभितं तथा ।
स्वर्णकूट इति ख्यातस्तंत्रशास्त्रानुसारतः ॥ १०५ ॥

कोणक भाग :—

तथा भागान्तरं वक्ष्ये शृणु शिष्यादि सर्वदा ।
नानाकारे तथा भागे देश कालानुसारत ॥ १०६ ॥

विना भागविभागेन वृथा हि श्रमकेवलम्ः ।
कोणका-पाग-भागेन वसु वा वाणभागिनः ॥ १०७ ॥

अमलक्यादियुक्तेन जायते मुख्यतस्तथा ।
देशान्तरे तथा वेदे भाजयेत् कोणकं प्रति ॥ १०८ ॥

शृणु भेदान्तरं चात्र अमलक्यान्तरे तथा ।
फेणि पीठाकृतौ छेद-सहछेद चतुष्टयम् ॥ १०९ ॥

संकीर्णभेदच्छेदास्तु निम्नदेशे समानतः ।
ऊर्ध्वे चामलकीभागः तृतीयः कणिकाकृतिः ॥ ११० ॥

ऊर्ध्वकोणे द्वितीये च कोणच्छेदद्वयं तथा ।
निम्नार्ध्वे रेखयुक्तेन क्षुद्रच्छेदानुसारतः ॥ १११ ॥

ऊर्ध्वेफेणी द्वयोर्युक्ते कोणच्छेदाकृतिः क्वचित् ।
निम्नोध्वे रेखकर्म च क्षुद्रच्छेदानुसारतः ॥ १११ ॥

मध्ये रथकयुक्तानां भेदः कोणक जायते ।
कुंभाकृतिः तथा छेदमध्ये च रथकाकृतिः ॥ ११२ ॥

खोदयेत् निपुणः शिल्पी छेदकोणः स उच्यते ।
देशान्तरे क्वचित् स्थाने केवलं छेदकाकृतिः ॥ ११३ ॥

खोदयेत् निपुणं शिल्पी छेदे सौम्यः सुखावहः ।
मध्यदेश समस्थाने केवलं वज्रमस्तकम् ॥ ११३ ॥

वसुभागेन संयुक्तं कोणकं छेद युग्मकम्* ।
* रेख शोभितम् ।
आमलक्यादियुक्तेन नाना भेदः स जायते ॥ ११४ ॥

वृत्तपीठसमो भागः कोणकं छेदभेदतः ।
भद्रपीठसमोभागः कोणकं बहुभेदतः ।
नानाकारे तथा कोणे कोणकभागनिर्णयः ॥ ११५ ॥

अनुराह भाग :—

शृणु संक्षेपतः चात्र अनुराहादिभागकम् ।
अनर्थराहदेशे च छेदकोणाकृतिः भवेत् ॥ ११६ ॥
अनर्थराहमध्ये च क्षुद्रस्तंभाकृतिर्भवेत् ॥ ११६ ॥

कोणकपार्श्वदेशे च अनर्थमध्यवर्त्तिनि ।
कथ्यन्ते अनुराहाणि कदाचिद् धारसंज्ञया ॥ ११७ ॥
कुर्याचु धाररूपेण अनुराहं मनोहरम् ॥ ११७ ॥

एते तु त्रिविधाः प्रोक्ता गुणकुंभा गृहादयः ।
नानाकृति तथा कर्म* कर्मभेदो हि केवलम् ॥ ११८ ॥
* बंधाकृति तथा कर्म

लम्बाकारे तदा क्षेत्रे अनुराहविचक्षणे ।
समभागे तथा दैर्घ्ये समभागानुसारतः* ॥ ११९ ॥
* प्रस्थभागानुसारतः

बन्धनादेशमारभ्य यावत् कंठस्थलं तथा ।
अनुराहसमो भागो लम्बाकारो मनोहरः ॥ १२० ॥

समभागे तथा *स्तम्भे समभागानुभागिनः ।

* स्तम्भः तोरणं गम्बुजाकृति

प्रस्थे च क्षीणयुक्ते* च भागस्तत्र स जायते ॥ १२१ ॥

* रेखंयुक्ते

कुंभिका प्रतिछेदेन कुंभाकारे यथाक्रमे ।
गुणसा सुमनाकारे गृहच्छेदान्तरे तथा ॥ १२२ ॥
छेदे स सुमनाकारकोणच्छेदान्वये तथा ॥ १२२ ॥

नानाकारे तथा कर्मपार्थक्यं जायते क्वचित् ।
मात्र मुख्य त्रयो भेदाः अनुराहादिनिर्णयः ॥ १२३ ॥

क्वचित् देशानुसारेण मिश्रबन्धः स जायते ।
द्विभागयुक्तभागेन रचयेत् कुंभिकादयः ॥ १२४ ॥

अनर्थबन्धा :—

अतः परं शृणु भेदान् अनर्थबन्धमुत्तमम् ।
वाणभेदे अनर्थञ्च जायते प्रमुखालये ॥ १२५ ॥

अनर्थ पट्टिका कुंभ पद्म-केशरमेव च ।
रथका मंडलाद्वारः* नानाकारे रथोत्तमे ॥ १२६ ॥

* द्वारमंडलम्

क्षुद्रक्षेत्रगुणाकारे केवलं छेदसन्निधौ* ।

* कोणकच्छेदपार्श्वगे

आद्यप्रान्ते गर्भकं च* अनर्थः स विधीयते ॥ १२७ ॥

* गर्भदैर्ध्याकृतिः बंधः

पट्टिका अधमा चैव कुंभका मध्यमा तथा ।
केशरबन्धना श्रेष्ठा अनर्थे सुमनोहरा ॥ १२८ ॥

कुंभाकारे तथा क्षेत्रद्विभागा कलिकाकृतिः ।
कुंभपाद अधोदेशे ऊर्ध्वकुंभो विशेषतः* ॥ १२९ ॥

* कुंभोदरं तथा

छेदयुक्ते तदा कुंभं कारयेत् कलशाकृतिम् ।
तथा दैर्घ्यान्तरक्षेत्रे पद्मकेशरकल्पितम् ॥ १३० ॥

क्षेत्रे च तोरणाकारे छेदादि कारयेत् सुधीः ।
कर्णिकाकलिकायुक्ते मध्ये क्षेत्रे मनोहरे ॥ १३१ ॥

रथकाः सर्वदा दिव्यनानारथसुशोभना ।
भूमियुक्ते सदा रेखप्रासादे शिखराकृतिः ॥ १३२ ॥

सर्वलक्षणसम्पन्नविमानपाग धारिणी ।
एवं विधानतो रेखकैलाशं रथमन्दिरे ॥ १३३ ॥

द्वाराकारं तदा क्षेत्रं स्तम्भाकारे द्वयं तथा ।
अध ऊर्ध्वे च रेखाणां मध्यांशे च गवाक्षकाः ॥ १३४ ॥

एवं वाणान्वयो भाग अनर्थनाम संज्ञकः ।
छेदभाग इति ख्यातः पागमध्ये सुशोभनः ॥ १३५ ॥

राहपाग :—

निम्ने कोणकच्छेदानाम् *ऊर्ध्वे च अमला शिला ।

* च भूमिदेश च

मध्ये च कुत्रचिद् दीर्घा पार्श्वे रथसुशोभना ॥ १३६ ॥

सर्वदा विषमे क्षेत्रे भागस्तत्र विधानतः ।
केवलं छेदयुक्तेन अलंकाराणि कारयेत् ॥ १३७ ॥

शृणु त्वं छेदभेदांश्च दीर्घाकारे च सप्तधा ।
छेदा गुणा तथा भेदा गम्बुजा काणिकाकृतौ ॥ १३८ ॥

वज्र-मस्तकदीर्घेन वर्त्तुला रेखसन्निभा ।
यदाकारः तथा राहो बन्धना ऊर्ध्वमंडले ॥ १३९॥

स्थलमारभ्य सूक्ष्मान्तः राहपीठः स उच्यते ।
समस्तसहज पीठ समाकारे समान्वये ॥ १४० ॥

मूलमारभ्य चूलांतं राहपीठः स उच्यते ।
समस्त सहजं पीठे क्रमसंकुचिताकृतौ ॥ १४० ॥

छेदयेत् भूमिरूपे च केवलं कोणखंडिता ।
एते च छेदभेदाः स्युः निम्ने च वज्रमस्तकम् ॥ १४१ ॥

अप्सरोविग्रहः पार्श्वे अन्ते सिंहः सुविस्तृते ।
नानालंकारयुक्तश्च राहच्छेदः तथाकृतः ॥ १४२ ॥

समक्षेत्रे समानेन समाकारे विधानतः ।
अन्ते ऊर्ध्वकोणभागं कुटिलच्छेदं खोदयेत् ॥ १४३ ॥

समक्षेत्रे समानेन क्रमसंकुचिताकृतौ ।
उभयपार्श्वदेशे च कुटिलच्छेदं खोदयेत् ॥ १४३ ॥

मध्ये तोरणछेदञ्च अर्धवर्त्तुल केशरम् ।
एते हि गुणभेदा स्युः नानाकारे मनोहरे ॥ १४४ ॥

भेदानां मुख्यभावेन ऊर्ध्वदेशे यथाक्रमे ।
द्विविधश्छेदस्तत्कृत्यं* संकीर्ण स्थलभेदतः ॥ १४५ ॥

* त्रिविध

स्थलभेदाच्च सम्पूर्णा संकीर्णा क्षीण अंगिनी ।
स्थलभेदे तदा क्षेत्रदैर्घ्याकारे विभाजयेत् ॥ १४६ ॥

त्रिभागस्थलभेदं च संकीर्णपार्श्वमंडलम् ।
मध्यक्षेत्रे यथाक्षेत्रदैर्घ्याकारे विखोदयेत् ॥ १४६ ॥

प्रतिभागे मध्यक्षेत्रे तोरणाकृतिमन्दिरः ।
छेदभागे तदा भागं केवलं रथकाकृतौ ॥ १४७ ॥
छेदोपरि तदा भाग उच्चेन रथकाकृती * ॥ १४७ ॥

गम्बुजा इति संख्याता राहा वर्धन*कारिणी ।

* मंडन

स्तम्भयुक्ते सम्पूर्णाङ्ग क्रियते गम्बुजाकृति ॥ १४८ ॥

अन्यथा समभेदेन वज्रमस्तकाकृति ।
रथकभेदयुक्तेन शिल्पाचारसमर्थित ॥ १४९ ॥

अन्यथा स्तंभसंयुक्ते वज्रमुंडं च खोदयेत् ।
रचयेत् भेदयुक्तेन शिल्पाचारसमर्थितम् ॥ १४९ ॥

राहपीठे तथा न्यासेत् पार्श्वस्तम्भ विशेषतः ।
वन्धना ऊर्ध्वदेशे च गर्भक* मध्यवर्तिनी ॥ १५० ॥

* छेदद्वारिका

पद्मपत्रादिरेखाभिः नियुक्ते स्तम्भशोभने ।
पुष्करं कलिकायुक्तं स्तम्भान्ते* वज्रमस्तके ॥ १५१ ॥

तन्मध्यवर्तिभूमौ तु नानाविग्रहखोदनम् ।

* मूले च

राह विग्रह :—

नाना पौराणिका मूर्तिर्यथा देवस्य मंडपे ॥ १५२ ॥

विशेषे गर्भकस्थानं शिवस्थानं तदुच्यते ।
नानाभेदे तथा न्यासेत् शंकरं चन्द्रशेखरम् ॥ १५३ ॥

नाटाम्बरं नटाकारे यौगिके यौगिकासने ।
नानाभेदं तथा शास्त्रे गर्भकं पूरयेत् स्थलम् ॥ १५४ ॥

शुभनक्षत्रयोगेन पूजयेत् गर्भकं तथा ।
भूसुरेण समायुक्ते विश्वकर्मादिपूजनम् ॥ १५५ ॥

सदाध्यानानुसारेण गर्भकाधिपशंकरम् ।
विग्रहकरणं मोक्ष शास्त्रानुकल्पने* यथा ॥ १५६ ॥

* तंत्र शास्त्र

एतानि मुख्यकार्याणि रथकाकृतिमन्दिरे ।
नानाभेदे तथा न्यास्यः केसरी केसरीमुखम् ॥ १५७ ॥

सिंहमुखादियुक्तेन प्रासादं मंडयेत् सुधीः ।
कंठदेशान्तरे रम्ये खप्परोनाम उच्चते ॥ १५८ ॥

कंठदेशान्तरे रम्ये खर्परं कलशादयः ।
सर्वांगच्छेदयुक्तेन प्रासादकर्म कारयेत् ॥ १५९ ॥

गूढं गूढतमं विद्यात् सर्वशास्त्रपयोनिधिः ।
शिल्पं नवनिता न्याये निर्यासं अपि............अपि ॥ १६० ॥
शिल्पतत्त्वं विना ज्ञानं सर्वं हि निष्फलं भवेत् ।
नवनीतं यथा क्षीरे निर्यासः शिल्पकौशलम् ॥ १६० ॥

विश्वकर्माकृतं शास्त्रं मर्यादानवकल्पितम् ।
पृथग् रीतिस्तथा भेदः दुष्करम् वर्णयामि किम् ॥ १६१ ॥

केवलं भेदज्ञानार्थं देशाचारविधानतः ।
अतिसंक्षेपतः प्रोक्तो यथा शास्त्रानुसारतः ॥ १६२ ॥

विमानमालिनी :—

अधुना तान्त्रिका भेदा यत्कीर्तिः सुमनोहरा ।
विमानं केवलं दृश्यं सर्वभागान्तवर्त्तिनि ॥ १६३ ॥

प्रासादस्य मूलो भूमिः भूम्याकारे च गर्भकः ।
भूमिः सा द्विविधा मुख्या समा वा विषमा तथा ॥ १६४ ॥

चतुरस्रं विना भूमिर्न सम्भवति अन्यथा ।
तदुक्त द्विविधः ख्यात गर्भकं भूमिरूपितः ॥ १६५ ॥

विषमक्षेत्रे या भूमिगृहं तदनुसारतः ।
श्रेष्ठ इति समाख्यातः प्रासादः सौधिकागमे ॥ १६६ ॥

कूटयुक्ते सदा क्षेत्रे कूटमुख्योर्धे केवलम् ।
कौशलमस्तको भागः सर्वदा जनमोहनः ॥ १६७ ॥

कूटगंभीरो यो भागो गर्भदेशान्तरे यथा ।
मखटास्तत्र शोभन्ते एतानि क्रमनिश्चयम् ॥ १६८ ॥

एष भेदो यदा श्रेष्ठो नाम्ना द्राविड़ उच्यते ।
वाड़भी देशभेदेन कार्य भेदे मनोहरे ॥ १६९ ॥

वाड़भी यदि दृश्येत गोमुखरूपिणी क्वचित् ।
विमानमालिनी माला स्वतन्त्रः पागनिर्णयः ॥ १७० ॥

वाड़भी सिंह मुख्या च अमला विहीना तथा ।
कोणकपाग हीनं च वाड़भी जातिनिर्णयः ॥ १७१ ॥

वेतालहेमकूटाभ्यां वाड़भी आगमान्वये ।
विमान मालिनी श्रेष्ठा कुशला कोशलाकृतिः ॥ १७२ ॥

सर्वाङ्गगुणसम्पन्नं सर्वांगमतिशोभनम् ।
नानालंकारयुक्तेन सर्वतंत्रस्वतन्त्रकम् ॥ १७३ ॥

पूर्वे यद् वर्णितं रूपं तद्रूपं भूमिछेदनम् ।
छेदनान्ते तथा पूजा भूमिसम्मिश्रणान्तरे ॥ १७४ ॥

शृणु त्वं गठनं शैलीभेदः प्राकार एव च ।
यंत्रमूर्त्तिः तथा गुणा स्थानांगाभरणं तथा ॥ १७५ ॥

पीठो जांघो यथारीतिः पंचकर्म-सुकौशलम् ।
जाघःभित्तिः तथा बन्धः बन्धना शिर* मंडनम् ॥ १७६ ॥

* भित्ति

कामबन्धो नागबन्धो शिखरे छेद मंडलम् ।
पूरयेत् शुभलग्ने च वासरे च शुभलक्षणे ॥ १७७ ॥

गर्भसथानस्य निर्माणप्रारम्भं कुरुते द्विजः ।
नृपादिसचिवाः श्रेष्ठाः पुरोधा राज्ञी एव च ॥ १७८ ॥

सर्वे च शिल्पिनः भाटो दैवज्ञश्चोत्तमः तथा ।
सहितं पीठपूजान्ते गर्भसूत्रादि-स्थापनम् ॥ १७९ ॥

गर्भकशंकरपूजा :—

पीठारम्भस्तदा काले कल्पिते बलिपूजनम् ।
दुर्गा काली तथा रौद्री गर्भेशी* भुवनेश्वरी ॥ १८० ॥

भैरवी

मध्यदेशे तथा केन्द्रे पूजयेत् रुद्रशंकरम् ।
नाटाम्बरादिः या मूर्त्तिरुग्रभेदे सुनिश्चिते ॥ १८१ ॥

नाटाम्बरो महाकाल उग्रतांडवलक्षणः ।
सौम्यभेदे तदाकारे नट भैरव एव च ॥ १८२ ॥

पूजयेत् सविधिं तत्र उपचारादिभिस्तथा ।
पुष्पं धूपः तथा दीपः खेचरान्नादि पायसम् ॥ १८३ ॥

शृणु ततः गर्भकाधीशः शंकरो नटधूर्जटिः* ।
ध्यानं यंत्रं तथा न्यासपद्धतिं सुमनोहराम् ॥ १८४ ॥

* शंकरस्य स्वरूपकम्

उमामहेश्वरौ पूर्वे सद्योजातश्च पश्चिमे ।
त्र्यम्बकं दक्षिणे चैव ऊत्तरे धूर्जटिं तथा ॥ १८५ ॥

मध्ये तु वामदेवञ्च पंच रुद्रादि मुख्यतः ।
पूजयेत् वामदेवस्य उग्रमूर्त्तिं सुनिश्चतम् ॥ १८६ ॥

वामदेवध्यानम् :—

जटाजूटसमायुक्तं नागेन्द्रशिरभूषणम् ।
खड्गखर्परभूषञ्च मुंडमालाधरं हरम् ॥ १८७ ॥

पिंगलवर्णकेशञ्च पिंगलं नयनत्रयम् ।
विकटदशनं घोरं ऊर्ध्वलिंगं दिगम्बरम् ॥ १८८ ॥

नागयज्ञोपवीतं च अस्थिकंकालविग्रहम् ।
खट्वांगखेटक-पात्रकपालखड्गशोभनम् ॥ १८९ ॥

वामे शूलाग्रभेदेन प्रेतरूपं सुछत्रकम् ।
त्रिशूलं परशुं शुभ्रं सदा नृत्यपरायणम् ॥ १९० ॥

एवं ध्यायेत् सदा देवं वामदेव नमोस्तुते ।
नाटाम्बरं च तत् स्थाने पूजयेत् ध्यानपूर्वकम् ॥ १९१ ॥

यंत्रानुसारि यद् रूपं ध्यानानुसारितं तथा ।

नाटाम्बरध्यानम् :—

शृणु चापरभेदांश्च सौम्य-विग्रह-लक्षणम् ॥ १९२ ॥

त्रिभंगस्थानसंस्थानं जटामुकुटमंडितम् ।
केयूरहारग्रैवेयकुण्डलं कटकानि च ॥ १९३ ॥

कंठे दिव्यतरं भूषा अंगदाष्टभुजे तथा ।
वामे च दक्षिणभुजे ऊर्ध्वदेशे भुजङ्गिकाम् ॥ १९४ ॥

खट्वांगं दक्षिणे निम्ने वामे च पानखर्परम् ।
दक्षिणभुजे पाशं च नागराजसुशोभितम् ॥ १९५ ॥

वामे च शाम्भवी मुद्रा दक्षिणादिग्वर्त्तिनी ।
दक्षिणभुजे तत् कंठे आश्रिता मुद्राभेदतः ॥ १९६ ॥

वाम तत्सव्यदेशे च अभयवरधारिणम् ।
उद्दण्डदौड़भावेन उग्रनृत्यांगचारणम् * ॥ १९७ ॥
उद्दण्डरूपयोगेन कुटिलनृत्याङ्गचालनम् ॥ १९७ ॥

विषमा पादभंगी च नाट्याम्बरधरं हरम् ।
एवं ध्यायेत् सदा रुद्रं गर्भकाधिपशंकरम् ॥ १९८ ॥

नाटाम्बरध्यानम् :—

वृषारूढं महादेवं जटाचन्द्रार्धशोभितम् ।
नानालंकारभूषा च वामे परशुमुत्तमम् ॥ १९९ ॥

डमरूं रूद्रघण्टां च ध्यानमुद्राः सुशोभनः ।
दक्षिणे नागपाशञ्च शूलं भीमाख्य मञ्जुलम् ॥ २०० ॥

दक्षिणे ध्यानमुद्रा च विपरीतांगदर्शनम् ।
नट सौम्यतमं शान्तं नाट्याम्बर नमोस्तु ते ॥ २०१ ॥

स्मृत्वा एतानि भेदानां नटरुद्रं गणाधिपम् ।
शृणु त्वं यंत्रभेदांश्च यद् यंत्रे न्यसेत् विग्रहम् ॥ २०२ ॥

नाटाम्बर यंत्रम् :—

समचतुरस्रक्षेत्रे मध्ये मंडलवर्त्तने ।
कारयेत् युगंभागन्तु त्रिरेखायुक्तमध्यमे ॥ २०३ ॥

लम्बाकारे तदा मध्ये मध्यरेखा सुविस्तरे ।
मध्यरेखा निम्न बिन्दुमारभ्य प्रस्थ मध्यमे ॥ २०४ ॥

कीलयेत् प्रथमा छेदद्वये पार्श्वसमन्वये ।
तद् युक्त रेखमालम्ब्य रेखावेद गुणांकिते ॥ २०५ ॥

मध्ये लम्बाकृतौ वेदमध्यरेखा समाश्रिते ।
पार्श्वदेशे द्वयाकर्षि ऊर्ध्वदेशांगचालनम् ॥ २०६ ॥

एतत्तु तांडवं यंत्रं सर्वतांडवलक्षणम् ।
सर्वनृत्यगतां मूर्त्तिं कारयेत् शिल्पिपुंगवः ॥ २०७ ॥

चतुरस्रसमः क्षेत्रे मध्ये मंडलमेव च ।
कारयेत् युगभागं च दैर्ध्ये प्रस्थे समानतः ॥ २०३ ॥

कोणच्छेदद्वयं तत्र मध्यरेखाविचुम्बितम् ।
मध्यरेखा निम्नबिन्दुमारभ्य मध्यप्रस्थगे ॥ २०४ ॥

छेदयेत् छेदयुग्मं च पार्श्वद्वयसमन्वये ।
तदूर्ध्वबिन्दुमारभ्य रेखाभ्यां वेदचुम्बिते ॥ २०५ ॥

मध्यप्रस्थोपरि मध्ये मध्यबिन्दुसमाश्रिते् ।
पार्श्वदेशे यथा ऊर्ध्वे भाजयेत् गुणयुग्मकम् ॥ २०६ ॥

ऊर्ध्वमध्ये भागयुग्मे त्रिभुजाकृति रेखकान् ।
एतानि ताण्डवे यंत्रे नृत्यमूर्त्तिं समाचरेत् ॥ २०७ ॥

नृत्यमूर्त्तिः सदा ख्यातः सर्वदानन्दवर्धकः ।
छेदभेदे तथा यंत्रे शरीरन्यासनिर्णयः ॥ २०८ ॥

नाटाम्बर १ :---

छेदोर्ध्वे बिन्दुसंख्यातः त्रिकूटाविन्दुसंज्ञकः ।
त्रिकूटास्थानयुक्तेन भ्रूमध्यस्थलमुत्तमम् ॥ २०९ ॥

तदाक्रम्य तथा मुखमण्डलं तिर्यगाकृति ।
चतुर्थो दक्षिणच्छेद* वर्तीस्यात् कंठेशतः* ॥ २१० ॥

* भागे * मुखं तथा

हृदयं दक्षिणे छेदे* नाभिश्च मध्यबिन्दुगा ।

* पार्श्वे

तत् स्थलदेशमारभ्य पादयोः वामदक्षिणे ॥ २११ ॥

दक्षिणवर्त्ती यश्छेदः वेदसंख्यक सन्निभः ।
द्वितीयेतुगुणे कार्यं वामांघ्रिर्जानुकं तथा ॥ २१२ ॥

दक्षिणंपादपार्श्वे तु मध्यप्रस्थसमन्विते ।
करणीयं तथा जानु दण्डं च त्रिभुजान्विते ॥ २१२ ॥

मध्यरेखार्धवामांशे भेदरेखांशे जानुना ।
दंडश्च प्रथमच्छेदे निम्नबिन्दुसमन्वये ॥ २१३ ॥

मध्यरेखार्द्धवामांशे कोणच्छेदसमन्विते ।
जानुदण्डं तथा निम्ने त्रिभुजस्य गुणान्वये ॥ २१३ ॥

दक्षिणलम्बरेखायां प्रथमे दक्षिणे करे ।
द्वितीयभुज निम्ने च तृतीय* च्छेदसन्निभे ॥ २१४ ॥

* कोणछेदः

निम्नांगगुणपक्षेण तृतीया करमिश्रिते ।
चतुर्थबाहुसंलग्ने चतुर्थो बाहुमुख्यतः ॥ २१५ ॥

निम्ने च गुणसंयुक्ते तृतीयत्रिभुजान्विते ।
चतुर्थबाहुसंलग्ने दण्डप्रस्थानुसारतः ॥ २१५ ॥

भुजदंड द्वितीयायां* रेखादेशे मनोरमे ।

* मध्यप्रस्थोपरि

वामोर्ध्वबाहुः ऊर्ध्वेन वामलम्बा गुणकृतौ ॥ २१६ ॥

ऊर्ध्वदेशान्वये दंडः बाहुः छेदांशशोभनम् ।
पुनस्तत् द्वितीया बाहु तत् निम्ने तृतीयावधि* ॥ २१७ ॥

* कोणछेदसमन्विते

तृतीया निम्नदेशे च पक्षकीलसमन्विता ।
चतुर्थबाहुसाम्येन दक्षिणे युग-कीलकाः* ॥ २१८ ॥

तत्‌तिर्यक् त्रिभुजस्य गुणावधिः

नाटाम्बर २ :--

प्रेतच्छत्रोपमं शूलं शिरः कपालभूषितम् ।
मध्यरेखोर्धे शिरश्च नाभिमध्ये च शाम्भवम् ॥ २१९ ॥

शूलहस्ते तदूर्ध्वे च प्रेतच्छतं मनोहरम् ।
सर्वाङसुन्दरं देहं करे कपालभूषितम् ॥ २१९ ॥

द्वितीयवामभुजायां चतुर्थ-च्छेद-चुम्बिनी ।
दंडनां वेद किलेषु स्पर्शिता खर्प्परादपि ॥ २२० ॥

लम्बाकारे चतुर्थो च तृतीयो लम्बभावतः ।
भुजदंडस्तथा वामे द्वितीयच्छेदसन्निभे ॥ २२१ ॥

पुनः शृणु दक्षभेद तृतीयाकर विकृते ।
द्वितीया छेदयुक्तेन बाहु-दंड-समन्वये ॥ २२२ ॥

चतुर्था-दक्षिण-भुजः स्कन्दमारभ्य निम्नगः ।
बाहुः समान्त-भावेन द्वितीयच्छेदसंयुते ॥ २२३ ॥

दंड-भावे तथा दंडं स्वकटिस्पर्शिता पुनः ।
वाम जानु तदालम्ब्य तृतीया किल भूषिता ॥ २२४ ॥
वाम बाहुः तदालम्ब्य द्वितीया किल भूषिताः

प्रथमच्छेदमारभ्य दक्षदंडञ्च पूर्ववत् ।
यावद् निम्ने च प्रस्थे च उभयोर्बाहुमध्यमे ॥ २२५ ॥

नाभितृतीयच्छेदेन कटिभागः सुदक्षिणे ।
वामपादस्तथा कुम्भा-कारेण जानु स्पर्शने* ॥ २२६ ॥
* पादग्रभूमिचुम्बिते ।

गुल्फदेशे तथा छेदे दंडः निम्नसतिर्यगे ।
अर्धांश द्वितीया बाहु पादाग्रप्रथमावधि ॥ २२७ ॥

समपीठोपरि पादं केवलम् अंगुलित्रयम् ।
चुम्बितभूमिभागेन नाटाम्बर इति स्मृतः ॥ २२८ ॥

नाटाम्बर ३ :—

मध्यरेखान्वये शीर्षकिरीटजूटमंडलम् ।
कंठप्रथमबिन्द्वौ च ऊर्ध्वदेशे मनोरमे ॥ २२९ ॥

मध्यबिन्दुपरे नाभि शृणु भुजांगनिर्णयः ।
दक्षिणे प्रथमं बाहुं तृतीयप्रस्थकल्पितम् ॥ २३० ॥

तृतीय* वाहुतो न्निम्ने दक्षिणे तृतीयावधि* ।
* द्वितीय * दैर्घ्यमावधि ।
ऊर्ध्वपरिमिते भागे दंडार्थयुगछेदने* ॥ २३१ ॥
* कोणकीलकम् ।

तद्‌गुणसन्निभे दंडवृत्तरेखासुमिश्रिते ।
तृतीयबाहुनिम्ने च द्वितीया किल सन्निधौ ॥ २३२ ॥

दंडानां रेख ऊर्ध्वे च ऊर्ध्वदेशे सुशोभने ।
चतुर्था दक्षिणभुजे वामयुगा गुणे यथा ॥ २३३ ॥

एतानि क्रमयुक्तानि वामपार्श्वे मनोरमे ।
द्वितीय-प्रस्थे या मध्य-प्रस्थपादांशभेदने ॥ २३४ ॥

प्रथमा किल पार्श्वे च वामे च दक्षिणे तथा* ।
कोणच्छेदान्वये द्वये ।
उत्कीर्णसन्निभे निम्ने पाददंडः सुशोभने ॥ २३५ ॥

वामपीठ-समायुक्ते दक्षिणे किलमध्यमे ।
लिङ्गपीठे तथा वस्त्राभरणं दिव्यभूषणम् ॥ २३६ ॥

एतानि मुख्यभेदानि नाटाम्बरसुनिश्चिते ।
कदवा चक्रमध्येन कदवा वृत्तमध्यमे ॥ २३७ ॥

निम्ने च कौणपं कुत्र अथवा वृषभासने ।
कदाचित् वृषभारूढो नानाकारे यथाक्रमम् ॥ २३८ ॥

करणीयं तथा पीठं पूजयेत् शिवशंकरम् ।

मार्जनविधिः —

पूजान्ते पीठभूमीनां मार्जनं कर्म उच्यते* ॥ २३९ ॥

करणीयं तथा मूर्ति पूजानुकूल्य गर्भके ।
पूजान्ते पीठशुद्ध्यर्थ मार्जनं कर्म कारयेत् ॥ २३९ ॥

यवतिलसर्षपं च तथा च शर्करादयः ।
मिश्रिते कुरुते तत्र दिग्बलिं नागमातृकाः* ॥ २४० ॥

* पूजयेत् नागमातृभ्यः दिशानुक्रमणे ततः ॥

कर्कोटको महानागस्तक्षकः कुलिशादयः ।
पिलिपिच्छस्तथा भेदे नागमातृकपूजनम् ॥ २४१ ॥

दर्भपलाशयुक्तेन सूक्तेन मार्जयेत् धराम् ।
करणीयं तदा कर्म विश्वकर्मा कुलोत्तमः ॥ २४२ ॥

प्रासादपद्धति :---

आद्ये स यंत्रभेदेन* उच्चता गर्भ-निर्णयः ।

* तालयंत्रेण ।

शृणु केन प्रकारेण भागनिर्णय पद्धतिः ॥ २४३ ॥

गर्भमन्दिरे यो बाहुस्तत् सर्वमिश्रिते फलम् ।
संख्या तद् वेदभागेन भाजयेत् युगसंख्यके ॥ २४४ ॥
सख्यारूपे विजानीयात्, वेदेन गुणितो तथा ।

यत्संख्याभागशेषस्तु तदंगुलैः पीठ मुत्तमम् ।
आद्यांशे भित्तिपीठञ्च चतुर्दिक्षु सुयत्नतः ॥ २४५ ॥
युगेन भाजिता संख्या फलं तत्र विनिश्चयेत् ।
पीठं तदङ्गुलैः ख्यातं वीथीरूपे चतुर्दिशि ॥ २४५ ॥

भित्ति पीठोपरि उच्चे पक्षभागेन गुणितम् ।
स वेधो जायते पीठकूर्मपृष्ठाकृतिः महान् ॥ २४६ ॥

केवलं खोदनं मात्रं न तत्र कर्म खोदनम् ।
तदूर्ध्वे परिमाणेन कूर्मपृष्ठोपरि तथा ॥ २४७ ॥

तद्भूमिं कारयामास तृतीयावर्त्तसन्निभाम् ।
यदाकारे तदा गर्भयंत्रस्य बाहु स्वगृहे* ॥ २४८ ॥

* यंत्ररेखागृहे

भित्तिभागे तथा कुर्यात् खान्दिगर्भ क्षीणाकृते : ।
ऋतुसंख्यका च सा खान्दी पागाख्यं सिन्धुविस्तरात् ॥ २४९ ॥

ऋतुसंख्यक गर्भाणि समुद्रसंख्यका गृहाः ।
पार्श्वे प्रस्थं च संकीर्ण दीर्घाकारे गृहाकृतौ ॥ २४९ ॥

स्वगृहभावभेदश्च शिल्पशास्त्रप्रकल्पितः ।
यथा सूत्रं तदनुसारे भाजयेत् वाडभीकृते ॥ २५० ॥

सपागभागभेदश्च शिल्पशास्त्रप्रकल्पितः ।
यथासूत्रं तथाकारे भाजयेत् वाडभीं तथा ॥ २५० ॥

सर्वांशस्य तु भेदाश्च प्रवक्ष्यामि हितार्थतः ।
विमानमालिनी गर्भं तत्र नेत्राख्य भेदयोः ॥ २५१ ॥

न केवलं बाड़देशे न ऊर्ध्वे गर्भकस्थले ।
शीवपीठे तथा भित्तौ नाग*पद्मादि बन्धना ॥ २५२ ॥

* देव

शाक्तपीठे तथा न्यस्यः कामबन्धः सुदुर्लभः ।
एते तु मुख्यभेदाः स्युः शास्त्र भेदेन सम्मताः ॥ २५३ ॥

विना कामकलायुक्तं निष्फलम् शाक्त मन्दिरम् ।
एतद् भेदेनसंयुक्ता द्विविधाकल्पना तथा ॥ २५४ ॥

पद्मगर्भे कामगर्भे च भेद :—— ।

पद्मगर्भः कामगर्भ इति देशांगभेदतः ।
शृणु त्वं भेदभागांश्च आद्ये कमलगर्भकः ॥ २५५ ॥

पार्थक्य जायते केषां पंचकर्मादि निर्मिते ।
शणु वस्त प्रवक्ष्यामि भित्तिभागस्य निर्णयम् ॥ २५६ ॥

केवलं पद्मगर्भस्य भागच्छेदस्तथैव च ।
यदुच्चं गर्भप्रासादं गुणसंख्याअनुक्रमे ॥ २५७ ॥

तत्संख्या वेदसंख्येन भाजयेत् शिल्पिपुंगवः ।
तृतीयांशस्तदा भागो भित्तिभागः स कथ्यते ॥ २५८ ॥

पुनश्च भित्तिभागस्य उच्चं स्यात् वेदभाजितम् ।
प्रथमांशः* स चाख्यातः पंचकर्मस्थलोत्तमः ॥ २५९ ॥

* निम्नांश

यथाकारः तथा भागः पूर्वोक्तविधिपूर्वकम् ।
खुर कुंभान्तरे पट्टि पट्ट्यान्ते कणिकोत्तमा ॥ २६० ॥

तदन्ते जांघक्षेत्रं च भित्त्यंगकर्मनिश्चयः ।
पद्मगर्भस्य निम्नांशे सौधिकागममार्गतः ॥ २६१ ॥

पद्मगर्भ पंचकर्म पार्थक्यम् :——

शृणु भागं तथा कर्म पंचांगभेदमेव च ।
पंचकर्मार्थे यः क्षेत्रः स चतुर्भागकल्पितः ॥ २६२ ॥

प्रथमावरणे खुरं द्वितीये कुम्भमेव च ।
तृतीयस्याद्यभागे च खान्दी कुम्भोपरि तथा ॥ २६३ ॥

तदूर्ध्वे डमरू-गर्भः खान्द्यर्ध्वे च वसन्तकम् ।
मध्यरेखञ्च संकीर्णे तन्निम्ने* पल्लवाकृतिः ॥ २६४ ॥

* मुखे ।

खुरादिवेदभागश्च शास्त्रानुसारतः सदा ।
खुरनिम्नगता भूमिः खुरदेशः* स कथ्यते ॥ २६५ ॥

* खुरपादः ।

कामगर्भपंचकर्म :——

खुरकुम्भ पट्टि खान्दी वसन्तादि चतुष्टयम ।
विमानमालिनीतुल्ये कामगर्भे च सिद्धिदा ॥ २६६ ॥

तत्स्थानेऽनेन रूपेण खुरो कुम्भो गुणत्रयम् ।
गुणान्ते खान्दीमध्येन फुलक्षेत्रं प्रधानतः ॥ २६७ ॥

वसन्त वल्लिभि क्षेत्रं तदूर्ध्वे मंडले सदा ।
वसन्तान्ते तथा पीठं निम्नगां धरणीं प्रति ॥ २६८ ॥

पञ्चधा पञ्चभागेन पञ्चकर्म विधानतः ।
अधुना केवलं वक्ष्ये कोणकं भित्तिनिर्णयम् ॥ २६९ ॥

पद्मगर्भ कोणक :——

पद्मगर्भस्य यद्रूपं तद्भागं शास्त्रनिर्मितम् ।
पञ्चकर्मोर्ध्वस्थानानां भित्त्यनुसारतः तथा ॥ २७० ॥

तद् भागं भाजयेत् वेदे लम्बभाग चतुष्टयम् ।
प्रथमं जांघबन्धश्च* अपरा वल्लभि गुणाः ॥ २७१ ॥

* नारीबन्ध

तदूर्ध्वे मंजुलं क्षेत्रं आलम्ब-माल-शोभितम् ।
अर्धभागैकभागेन कणिक्षेत्रं* मनोहरम् ॥ २७२ ॥

* कणिपीठ

तदूर्ध्वे चार्धभागेन भारवाहकमंजुले ।
युगल अथवा रन्ध्र भाररक्षी तदाचरेत् ॥ २७३ ॥

शृणु संक्षेप-रूपेण प्रतिभागादिकर्मणः ।
केन भेदप्रकारेण मंडयेत् भागमुत्तमम् ॥ २७४ ॥

वसन्तोऽर्धेऽर्धभागेन डमरूकमलाकृति ।
पीठं कृत्वा तदा रम्ये चामरा परिचारिका ॥ २७५ ॥

चामरा वाद्यभेदे च वादिका ताम्बुलप्रिया ।
अर्चिकादिक्रमे न्यास्या कन्या तत्र मनोहरा ॥ २७६ ॥

तद्बन्ध ऊर्ध्वदेशे च सुरम्ये कुञ्चिता लता ।
आलम्बिका तथा शेषे क्षुद्राकारे पट्टिद्वयम्* ॥ २७७ ॥

* क्षुद्राकार पीठस्तथा ।

खान्दीमध्ये कणि दृढे केवलं रेखमध्यमे ।
तत्रैकं युगलं वापि भारकेन्द्राधिपोऽपि वा ॥ २७८ ॥

भारमूर्तिं ।

क्षेत्रोपरिलतारम्या वाणधा वेदधा गुणे ।
आलम्बिकागुणाकारे हरिमुखावलम्बिनी ॥ २७९ ॥

एते तु क्रमभेदा आद्यस्छेदे च कोणकः ।
जांघादिभित्तिक्षेत्रे च पद्मगर्भेण मुख्यतः ॥ २८० ॥

अनुराह :—

तदन्ते चार्धक्षेत्रेण युगभागैकखान्दिका ।
खान्दीमध्ये लम्बारूपे सुदृढे स्तम्भखोदनम् ॥ २८१ ॥

यदाकारा* भवेद् भित्तिस्तम्भः तदनुसारतः ।
वेदभागेन तत्स्थानं पादः स्तम्भगुणस्तथा ॥ २८२ ॥

* यथा उच्चं ।

गुणान्ते* रेखायुक्तेन वेदभाग सकल्पिते ।
स भाज्यो भागयुक्तेन पादभागचतुष्टये ॥ २८३ ॥

* प्रस्थतः ।

तथा च रेखयुक्तेन पाद भागः चतुष्टये ।
पादकुम्भे तथा निम्ने तस्योर्ध्वे गृहमेव च ।
गृहोपरि त्रिभागेन सुरम्ये क्षुद्रबन्धना ॥ २८४ ॥

पादकुम्भे खुरः* कुम्भे संकीर्णे पट्टिकेवला ।

* उरु तथा ।

पट्ट्यंश ऊर्ध्वदेशेन ग्रहभेदे मनोरमे ॥ २८५ ॥

नानाभेदे तथा नारी नानोपचारधारिणी ।
गृहान्तरालभागेन पट्टिफेणी वसन्तकम् ॥ २८६ ॥

क्षुद्राकारे पुष्परेखाबल्लिभिः मंडयेत् सुधीः। ।
एतानि प्रथमे भागे नागबन्धस्य निम्नगे ॥ २८७ ॥

स्तम्भाश्च पादभागान्ते नागमूर्त्ति* विमण्डिताः ।

* नागछंद

स्तम्भस्य प्रथमावर्त्ते चोलवन्धानुसारतः ॥ २८८ ॥
स्तंभस्य मध्यदेशे च चोलदेशानुसारतः ।

यद्भागपाददेशे च तस्योर्ध्वे चोर्ध्वबन्धना ।
केवलं चोर्ध्वदेशेन वल्लिभिः पट्टिरुत्तमा* ॥ २८९ ॥

* विस्तृते

मध्यभेदे तथा नागःस्तम्भे च लतिकाकृतिः ।
स्तम्भदंडे यथा भित्तिः नागः तदनुसारतः ॥ २९० ॥

त्रिवलिःपंचधा तत्र नागशीर्षादिनिर्मिता ।
मण्डिता नागबन्धैश्च यथानुलोचिता पुरा ॥ २९१ ॥

शास्त्रे निगूढं तत्त्वं तु शुभम् प्रासाद-रक्षणे ।
स्थलभेदे लताकारे खोदयेत् नागमातृकाः ॥ २९२ ॥

नागमातृकाभेद :––

सप्तशीर्षा बाणशीर्षा वेदशीर्षा तथैव च ।
नागमाता तथाभेदा युगलनागमातृका ॥ २९३ ॥

ऊर्ध्वशीर्षा ऊर्ध्वपुच्छा युग्मपुच्छा सुगर्भका ।
अनन्तगर्भका दिव्या प्रासादे सर्वतोवरा ॥ २९४ ॥

एता तु वसुभेदेन अष्टनागमणिगणाः ।
भित्तौ तोरणदेशे च स्तम्भक्षेत्रे विमण्डिता ॥ २९५ ॥

नागयुक्ते अहिस्तम्भे अनुराहे स्वकेगृहे ।
विशेषे वाड़भीक्षेत्रे नागराजादयस्तथा ॥ २९६ ॥
विशेषे वाड़भीद्वारे नागराजद्वयं तथा ॥

अनुरथ :––

वेदभागं तथाऽनर्थं जांघश्रेष्ठोत्तरं यथा ।
तद्भागनिर्णयो मुख्यः पीठजंघादि पट्टिकम् ॥ २९७ ॥

अनुराहो यथा प्रस्थं तत्पक्षगुणप्रस्थकः ।
स्थिरौ दैर्घ्याकृतौ लम्बः पूर्वभागनुसारतः ॥ २९८ ॥

समक्षेत्रे तथा वेदे त्रिभागो जायते पुनः ।
पंचकर्म बृहत्क्षेत्रे तदूर्ध्वे जांघमुत्तमम् ॥ २९९ ॥

पीठाकारे पीठजांघं शिल्पशास्त्रानुमोदितम् ।
निम्ने पूर्वं यथा क्षेत्रं तत्क्षेत्रे कर्मपंचकम् ॥ ३०० ॥

तदूर्ध्वक्षेत्रं वेदेन भाजयेत् अंगुलाकृतौ* ।
* स्तंभ आकृतेः
एकभागं गृहञ्चैव जांघस्तु अपरद्वयम् ॥ ३०१ ॥

गृहक्षेत्रे पार्श्वभागे निम्नांशे स्तम्भखोदनम् ।
मध्यभागे तदा खान्दी गृहाकारे समानतः ॥ ३०२ ॥

आवरणभेद :—
खान्दीभागस्य ऊर्ध्वेण गर्भकं पट्टिमुत्तमम् ।
मध्ये शिवगणास्तत्र रुद्रमूर्तिः त्रयांशके* ॥ ३०३ ॥
* कारयेत्

सद्योजात :—
जटाजूटधरं देवं त्रिनेत्रं वदनोज्ज्वलम् ।
नागेन्दद्रभूषणञ्चोग्रं खड्गखेटकधारिणम् ॥ ३०४ ॥

अर्धेन्दुकृतचूड़ायां श्वेताम्बरधरं विभुम् ।
नानालंकारभूषात्तु सद्योजातस्तु दक्षिणे ॥ ३०५ ॥

तत्पुरुष :—
पुनश्च तत् समानांशे जटाचन्द्राविभूषितः ।
वाणलिंगसमो देहः त्रिशूलं च कपालकम् ॥ ३०६ ॥

एवं ख्यातो महारुद्रः तत्पुरुषं शुभप्रदम् ।
श्रीकण्ठ रुद्र :—
स्थापयेत् पश्चिमे रुद्रं श्रीकण्ठं नागभूषणम् ॥ ३०७ ॥

षोड़शभुजमाक्रान्तं नागं खड्गं गदां तथा ।
सर्प-पाशं तथा चक्रं डमरुं मुद्गरं महत् ॥ ३०८ ॥

शूलमंकुश रुद्राक्ष दक्षिणकरे सन्निभे ।
तोमरं पट्टिसं वामे चर्मखर्परमेव च ॥ ३०९ ॥

कपालमंथना-शक्त शक्तिं परशुमुत्तमम् ।
व्याघ्रासनधरं देवं द्वीपिचर्मधरं विभूम् ॥ ३१० ॥

घोर :——

तत्समानं यदा खान्दी तत् खान्दी घोरमन्दिरम् ।
पीताम्बरधरो देवः लिंगोयंत्राक्षमालिकः ॥ ३११ ॥

मृत्युञ्जय :——

उदीच्यां दिशि संस्थाप्यं गर्भकं भागमन्दिरे ।
मृत्युञ्जयो महारुद्रः चतुर्बाहुः त्रिलोचनः ॥ ३१२ ॥

ज्योतिर्नेत्रधरं देवं हस्ताब्जे निगमं महत् ।
अभयमुद्रा तथा माला शीतवर्णमनोहरम् ॥ ३१३ ॥

विरूपाक्ष :——

तत्पार्श्वगर्भके भागे विरूपाक्षं महाशिवम् ।
डमरुचक्रे नागश्च शूलांकुशसुधानिधिः ॥ ३१४ ॥

सौम्यमाला तथा खड्गः वामे च घण्ट मुत्तमम् ।
कपालं पानपात्रञ्च खट्वाङ्गं कुण्डिका धनुः ॥ ३१५ ॥

परशुं पट्टिकं दिव्यं शुभ्रवस्त्राधरं शिवम् ।
उत्तरदिगभागेन स्थापयेत् शिल्पिपुंगवः ॥ ३१६ ॥

एते तु शिवभेदाः स्युः प्रस्थे च जांघभेदतः * ।
* अनर्थजांघमध्यमे ।
भाजयेत् प्रस्थमध्ये*च जांघपट्टीं मनोहराम् ॥ ३१७ ॥
* ऊर्ध्वे

केवलं वाड़भी क्षेत्रे यदा पूर्वानुसारतः ।
तत्क्षेत्रमूलमारभ्य यावद्भित्तिस्तथा दृढे ॥ ३१८ ॥

लंबक्षेत्रे तथा जांघे वर्त्तुला गुम्फनाकृतौ ।
लता दिव्या तथा न्यास्या नानाकारा सुशोभना ॥ ३१९ ॥

मध्यभागे च यत् पार्श्वं किञ्चिन्निम्नतरं गुणे ।
खोदयेत् पद्मपीठं तु जांघभित्तिं सुकौशलम् ॥ ३२० ॥

जांघद्विभागक्षेत्रेण किञ्चित् प्रशस्तचूलिका ।
ऊर्ध्वदेशे समाने च खोदयेत् चूलिकां प्रति* ॥ ३२१ ॥
* पट्टिकां प्रति ॥

तन्निम्ने* समभागेन वसुधां दशभागतः ।
* तन्यून
खोदयेत् पट्टिकाक्षेत्रं गृहदेशान्तरे तथा ॥ ३२२ ॥

प्रतिक्षेत्रे वेदभागे भाजितं यत् फलं* ततः ।
* तत्स्थलं
निम्नतमार्धभागे च स्थापयेददिव्य पट्टिकाम् ॥ ३२३ ॥

पक्षभागसमायुक्ते पीठं पद्मपत्राकृते ।
मनोज्ञा पट्टिभागे च गुण्डिकापुष्पिकादयः ॥ ३२४ ॥

पट्टिनिम्नार्धभागे तु खान्दी गर्भाकृतिः सदा ।
खोदयेत् भागयुक्तेन पद्मपीठं मनोहरम् ॥ ३२५ ॥

शृणु तत् शीर्षभागान्तं चूलिकाबन्धनिर्णयम् ।
किञ्चिदूर्ध्वे पट्टिक्षेत्रं निम्नभागे वसन्तकम् ॥ ३२६ ॥

किञ्चिद् दीर्घं पट्टिक्षेत्रं तद्भागे च वसंतकम् ॥
पद्मपत्राकृतिचूल भागत्रयेण तत् स्थले ।
गुण्डिका शोभिता चाग्रे दन्तुरिका चे कृते दृढ़े ॥ ३२७ ॥

पट्टिक्षेत्रसमं पृष्ठं कलसान्तं तथोत्तरे ।
चूलिका मंडला दिव्या क्षीणाकारेण कुंभकम् ॥ ३२८ ॥

एतैस्तु भेदैर्युक्ताः स्युः सौधिकागममार्गतः* ।
* पद्मगर्भः स्थलोत्तमे ।
अनर्थपागयुक्तं च कारयामास निश्चिते ॥ ३२९ ॥

राहा—

तदन्ते भित्तिदेशेन अपरा भागमुत्तमा ।
अनुच्छेदक्रमं तत्र वक्ष्यामि सुधियां प्रति ॥ ३३० ॥

सुधीबोधाय यद् ज्ञानं शिष्यार्थं कुशलं महत् ।
अनर्थान्ते यथाकारे द्विगुणं खान्दिकस्थलम् ॥ ३३१ ॥

तत्स्थाने केवलो गर्भः अथवा रेखिकावलिः ।
राहा पागस्य यो भागः तद्गुणा भेदवर्णना ॥ ३३२ ॥

वदिष्यामि सुयत्नेन शृणु त्वं सावधानतः ।
पंचकर्मावधि स्थाने लम्बाकारे यथा तथा ॥ ३३३ ॥

युगधा भाजयेद् बन्धं मध्ये द्विभागगर्भिका ।
यदा परिमिताः प्रस्थ पंचकर्मखुरादयः ॥ ३३४ ॥

तद् वेदभागभागेन वसन्तस्योर्ध्वदेशतः ।
तद्भागप्रस्थयुक्तेन सुदीर्घे उभये दिशि ॥ ३३५ ॥

यथा अनर्थदेशश्च खान्दीदेशातिक्रमे ।
गर्भकं लम्बभागेन त्रिभागं देशमुख्यतः ॥ ३३६ ॥

वसन्तलम्बयुक्तेन जायते पृथगाकृतिः* ।
वेद भागे यथा निम्ने प्रस्थे भाज्यं च बाणधा ॥ ३३७ ॥

* वर्द्धिताकृतिः

दैर्घ्यभागे वेदछेदलम्बाकारे समानतः ।
शृणु कर्म तथा भेदगुणकर्मानुसारतः ॥ ३३८ ॥

निम्नाद्यभागार्द्धभागे मध्ये क्षीणा च पट्टिका ।
ऊर्ध्वे गृहाकृतिच्छेदःनिम्ने पीठाकृतिस्थलम् ॥ ३३९ ॥

पद्मपीठसमं पीठं गृहे च विग्रहास्तथा ।
नानाकारे तथा मूर्त्तिः यथा कल्पितनिश्चयः* ॥ ३४० ॥

* मानसे

वेदभागत्रिभागेन निम्नपट्टिवसन्तकम् ।
तदूर्ध्वे पद्मपीठञ्च तृतीया खान्दिखोदनम् ॥ ३४१ ॥

युगभागैकभागेन खान्दी ऊर्ध्वगता तथा ।
पट्टिका चोत्तमा तत्र भागमानानुसरतः ॥ ३४२ ॥

युगभागे युगाच्छेदप्रथमे खान्दिरुत्तमा ।
अपरे फेणिका ऊर्ध्वे पुनः खान्दी च पट्टिका ॥ ३४३ ॥

बाणभागे समक्षेत्रे केवलं पीठिकाकृतौ ।
पंचकर्मोर्ध्वभागेन यद्भागस्तम्भदेशिकः ॥ ३४४ ॥

निशाभाग :—

तद्भाजयेत्देशं युगे समभावे समन्वये ।
आद्यभागे यथापूर्वं* पक्षभागेन भाजितम् ॥ ३४५ ॥

* निम्ने

ऊर्ध्वे डमरुपीठस्तु तदूर्ध्वे परिचारिका ।
तदूर्ध्वभागयुक्ते च वल्लिभिः कुञ्चिता लता ॥ ३४६ ॥

लता पुष्पलता दिव्या वेदभागावलम्बिनी ।
युगभागस्य तन्निम्ने संकीर्णं पीठमुत्तमम् ॥ ३४७ ॥
ऊर्ध्वार्द्धभागे चालम्बं तदूर्ध्वे क्षीणपीठिका ॥

पद्मपत्राकृतिः पीठ ऊर्ध्वे च भाररक्षकाः* ।
* भारभैरवः ।

पार्श्वद्वयं तथाकारे क्रमेणैतेन पूर्ववत् ॥ ३४८ ॥

कारयेदतिरम्यं च लतादिखोदनं महत् ।
तदन्ते कथयिष्यामि निशाभागस्य निर्णयम् ॥ ३४९ ॥

निशाभित्तिः तथा बन्धः पुनश्च गर्भकावधि ।
* निशापीठसमारंभः यावदेशं च गर्भकम् ।
निशागृहे यथा स्थानं बाणरूपेण भाजितम् ॥ ३५० ॥

ऋतुभागे तथा छेद* गृहमध्ये चतुष्टयम् ।
* दैर्घ्ये

प्रस्थभागं तथा न्याये ऋतुभागे विभाजयेत् ॥ ३५१ ॥

केवलं चोर्ध्वभागैकबन्धस्थानं तदुच्यते ।
प्रस्थबन्धे प्रस्थभागे* वर्जितस्तम्भांशके ॥ ३५२ ॥
* प्रस्थयुक्ते स्तंभमध्ये

योभागो गर्भदेशे च वेदभागेन भाजितः ।
मध्यभागस्तथा उच्चे लक्ष्मीबन्धस्वरूपकः ॥ ३५३ ॥

तत्स्थानमुभये पार्श्वे समभागे गुणाकृतौ ।
समकार्यान्तरे रम्ये द्वारदेशाकृतौ सदा ॥ ३५४ ॥

गुण समविभागेन बाणधा वेदधा तथा ।
केवलं मध्यभागेन कणिकाकृति* गुण्डिका ॥ ३५५ ॥
* फेणिकाकृति

पार्श्वदेवताध्यानम्––

निशामध्यान्तराले च हेरम्बं विघ्ननाशनम् ।
दक्षिणस्यां दिशायान्तु स्थापयेत् शिल्पिपुंगवः ॥ ३५६ ॥

हेरम्बः ––

त्रिभंगस्थानसंस्थानं जटामुकुटमण्डितम् ।
अर्धेन्दुकुञ्चितं केशं केयूरकटकानि च ॥ ३५७ ॥

सूर्पकर्णं तथा खर्वं चतुर्बाहुं त्रिलोचनम् ।
ऊर्ध्वे च दक्षिणे वामे* अंकुशं नागपाशिकाम् ॥ ३५८ ॥

* करे

लम्बोदरं तथा शुण्डं मोदकं सम्मुखावधि ।
दक्षिणे च करे योज्यं भूमौ परशुमुत्तमम् ॥ ३५९ ॥

अम्बिका–––

एवं स्वरूपं यत्नेन दक्षिणस्यां दिशि न्यसेत् ।
वामभागे तथा गौरी अम्बिकां शक्तिरूपिणी ॥ ३६० ॥

नानालंकारयुक्तं च पीठं तत्र मनोहरम् ।
तन्मध्ये लम्बभावेन शक्तिस्त्रिभंगसंस्थिता ॥ ३६१ ॥

ऊर्ध्वहस्तद्वये वामे खर्परं खड्गदक्षिणे ।
अधोदेशे तथा निम्ने अभयवरधारिणी ॥ ३६२ ॥

केसरी वाहनं दिव्यं वेष्टिताः परिचारिकाः ।
चामरादिसमांयुक्ता ऊर्ध्वे पार्श्वे विमण्डयेत् ॥ ३६३ ॥

कार्तिकेयः–––

एवं पृष्ठे निशाभागे कार्त्तिकेयं षडाननम् ।
देवसेनापतिं रम्ये स्थापयेत् भित्तिमण्डले ॥ ३६४ ॥

जटाजूटसमं युक्तं* किरीटं कुण्डलं वरम् ।

* प्रभायुक्तं

षण्मस्तकयुतं देवं प्रशान्तवदनोज्ज्वलम् ॥ ३६५ ॥

द्वादशबाहुसन्निभं नानालंकारभूषितम् ।
शक्तिं पाशं तथा खड्गं खर्परं चर्मनिर्मितम् ॥ ३६६ ॥

शरं शूलादियुक्तं च घटयेत् वामपल्लवे ।
दक्षिणे च करे स्थाप्यम् अंकुशं शोभनध्वजम् ॥ ३६७ ॥

एताश्च घटिता* मुद्रा कोदण्डः खेटकं तथा ।

* तर्जनी ।

ताम्रचूलं तथा दिव्यं हृदयदेशमंडनम् ॥ ३६८ ॥

नानाभूषणभूषाढ्यं वीरालंकारभूषितम् ।
स्थापयेन्निपुणे रम्ये पार्श्व* पीठे निशागृहे ॥ ३६९ ॥

* पृष्ठ

ऊर्ध्वगर्भिका—

शृणु त्वं भागभेदं च गर्भिकाभागमुत्तमम् ।
कोनच्छेदादियुक्तञ्च गर्भकं भागनिर्णयम् ॥ ३७० ॥

गृहान्तराल ऊर्ध्वे तु यत् स्थानं पट्टिकावधि ।
तत् स्थानं गर्भकं ख्यातं निशामंडनमुच्यते ॥ ३७१ ॥

दैर्घ्ये वेदप्रस्थभागे बाणभागसमन्वये ।
आद्यभागे तथा निम्ने पट्टिवेदगुणान्वितम् ॥ ३७२ ॥

पट्ट्यूर्ध्वे पद्मरेखा च तदूर्ध्वे खान्दिरेव च ।
सा खान्दी प्रथमा भाग पक्षभागैकांशजा ॥ ३७३ ॥

अपरांशे तथा दिव्ये वसन्तचूलिकादयः ।
चूलिका ऊर्ध्वदेशे च वेदभागैकगौहरा ॥ ३७४ ॥

खान्दी ऊर्ध्वे यथाभागे फेणी वा अर्धकुम्भिका ।
युगभागैकभागेन गौहरं पट्टिका तथा ॥ ३७५ ॥

पट्ट्यन्ते चापरे भागे पद्मपत्रादिभूषणम्* ।

* ऊर्ध्वगाः

पीठान्ते चूलिका श्रेष्ठा पश्चिमे कुञ्चिताकृतिः ॥ ३७६ ॥

वसन्तस्पर्शितं चूल निशांगगर्भकं महत्* ।

* निम्नांशे विग्रहो महान् ।

गर्भकान्ते तथा कुंभी निम्नगा धरणीं प्रति ॥ ३७७ ॥

एतैस्तु भागैर्युक्ताः स्युः भित्ति-देशे मनोरमे ।
पद्मगर्भप्रसंगेन मुख्यांगभेदनिर्णयः ॥ ३७८ ॥

भित्तिबन्धना—

अन्त्यैकभागे ऊर्ध्वेण ऊर्ध्वभित्तिः यथोक्तयः ।
भित्त्यूर्ध्वेऽधिकभागे च वाड़भीभित्तिबन्धना ॥ ३७९ ॥

यदा परिमिता भित्तिर्युगभागेन भाजिता ।
तत्फलस्य परिमाणेन ऊर्ध्वभित्तिन्तदाचरेत् ॥ ३८० ॥

लम्बाकारे तथा भित्तिः केवलबन्धं च वर्द्धयेत् ।
अनर्थमनुराहां च कोणकादि च खोदयेत् ॥ ३८१ ॥

युगपार्श्वे यथास्थाने सम्मुखे पार्श्वकोणके ।
निशोर्ध्वे गर्हितस्थाने केवलं नैव खोदयेत् ॥ ३८२ ॥

राहापृष्ठे यथास्थाने संमुखे पार्श्व एव च ।
निशोर्ध्वे वर्जितं तत्र नैव खोदयेत केवलम् ॥ ३८२ ॥

प्रस्थाकारे यदा क्षेत्रं बन्धनावेदभागकम् ।
ऊर्ध्वे निम्ने तथापट्टिमध्ये पद्माकृतौ तथा ॥ ३८३ ॥

वसन्तक्षेत्रे या चाद्या वर्त्तुला लतिकोत्तमा ।
ऊर्ध्वे निम्ने तदा सूक्ष्मे पट्टिं कुर्यात् विशेषतः ॥ ३८४ ॥

पक्षभागे यदा पीठं पद्मपत्रसुशोभितम् ।
खोदयेन्निपुणः शिल्पी गुणानुसारतः तथा ॥ ३८५ ॥

वेदभागे यदा प्रस्थस्तत्प्रस्थे नेत्रभागके ।
किञ्चिन्निम्नतरं क्षेत्रं तदंशे गजमालिका ॥ ३८६ ॥

गवाक्षका अन्यक्षेत्रे अथवा वाजिझम्पकाः ।
गजवाजि तथा भूपो राजबन्धः स कथ्यते ॥ ३८७ ॥

गजवाजि तथा राजबन्धनिरूपणम्—

श्रृणु त्वं बन्धभेदानां संज्ञां भेदानुसारतः ।
केवलं गजयुक्ता सा प्रसिद्धा गजमालिका ॥ ३८८ ॥

अश्वयुक्तं तदा क्षेत्रं यदि स्यात् पंक्तिभावतः ।
वाजिझम्पा च तन्नाम शिल्पविद्यानुसारतः ॥ ३८९ ॥

गजं वाजिं पदातिं च सेनामुखादिखोदितम् ।
राजक्षेत्रं तदा नाम्ना राजबन्धः स कथ्यते ॥ ३९० ॥

बन्धेनानुगतं स्थानं राहपार्श्वे च केवलम् ।
केन रूपेण तत् स्थानमूर्ध्वदेशे च खोदयेत् ॥ ३९१ ॥

राहे ऊर्ध्वभागः—

तत्संज्ञां भेदछेदांश्च भागानुभागकेवलम् ।
धीर शिष्यप्रियतम श्रृणु त्वं सावधानतः ॥ ३९२ ॥

राहे च ऊर्ध्वदेशे च भित्त्यग्रे या वसन्तिका ।
तदर्धे खान्दिकां दिव्यां खोदयेत् पक्षभागतः ॥ ३९३ ॥

खान्द्या ऊर्ध्वे तदा रेखा वेदसंख्या युगाथवा ।
आचरेल्लंम्बभागेन फेणीदेहे मनोरमे ॥ ३९४ ॥

रेखान्ते द्विगुणं स्थानं फेण्याकारे त्रयांशके ।
अंशप्रान्ते तथा रेखा वेदसंख्या युगाथवा ॥ ३९५ ॥

अवश्यमेव तद्भागं बन्धनापीठसंगमे* ।
राजबन्धक्रमे गृहवसन्तबन्धे शोभनम् ॥ ३९६ ॥

* तुल्यतः

विभंगक्रमयुक्तेन वल्लिभिः पुष्पखोदनम् ।
ऊर्ध्वे निम्ने तदा पट्टिमध्ये छेदा* मनोरमाः ॥ ३९७ ॥

* वल्ली

तदूर्ध्वे समभागेन वृत्तवज्रांगमस्तकम् ।
सविधिं सगुणे रम्ये खोदयेत् भागानुसारतः ॥ ३९८ ॥

आद्यरेखा कृते बन्ध अनुसारे वृत्तं तथा ।
समभागे* ऊर्ध्वदेशे सिंहमुखविधानतः ॥ ३९९ ॥

* दैर्घ्यभागे

सिंहमुखाग्रनिम्ने च आलम्बं वर्त्तुलाकृतिम् ।
वर्त्तुल मध्यरेखायां आद्यवर्त्तुलचुम्बिनी ॥ ४०० ॥

पार्श्वे तथा छेदभागे कुञ्चिताकृतिगुम्फना ।
अग्नेः शिखासमं तत्र वेष्टनं मंडले तथा ॥ ४०१ ॥

मध्ये तृतीयावर्त्ते च मस्तकं सुमनोहरम् ।
खोदयेत् क्षुद्रछेदेन वर्तुलं मण्डलोपमम् ॥ ४०२ ॥

संक्षिप्तनिर्णयं भेदः वाडभी भित्तिलक्षणा ।
गर्भकदेशभेदेन न कुर्यात् छेदमन्यथा ॥ ४०३ ॥

केवलं सौम्यरूपेण कोणकान्यत्रभूमिकाम् ।
तद्रूपे गठयेत् राहं यत्र बेकिः सुकुञ्चिते ॥ ४०४ ॥

बेकिदेशान्तरे रम्ये सिंहं च मुद्रके* तथा ।
क्षुद्राकारे तथा निम्ने अमलक्या समावृत्तम् ॥ ४०५ ॥

* वा भैरवं

पिण्डिका कलशं तत्र पद्माकारे मनोहरे ।
एतैश्च भेदैः संयुक्तं पद्मगर्भं सुगर्भकम् ॥ ४०६ ॥

पद्मगर्भाधिपं देवं शंकरं चानुचिन्तयन् ।
संक्षेपरूपतः चात्र पद्मगर्भादिनिर्णयः ॥ ४०७ ॥

शिष्यप्रशिष्यबोधार्थं प्रवक्ष्यामि सुयत्नतः ।
वाडभीन्यासयुक्तं च केवलं भित्तिनिर्णयम् ॥ ४०८ ॥

अथाहं सम्प्रवक्ष्यामि सुधीसन्तोषभावतः ।
विमानमालिनीं रम्यां पृथग्रूपाश्रयां महात ॥ ४०९ ॥

अधमक्षीणज्ञानेन किं वाच्यः शास्त्रविस्तरः ।
सौधिकागमन्यायेन देशभेदानुसारतः ॥ ४१० ॥

या देवी शक्तिरूपा सा सर्वशक्तिप्रदायिनी ।
तत्पादपंकजं नित्यं निर्भरं तत्त्वनिर्णये ॥ ४११ ॥

शिवशक्त्यात्मकं रूपं यद् रूपं ज्ञानकल्पितम् ।
तत् स्वरूपानुचिंत्येन वर्णयामि न संशयः ॥ ४१२ ॥

पीठभागं तदा छेदपूर्वे या चोक्तपद्धतिः ।
कूर्मपीठं तदाकारे पंचकर्मदि कारयेत् ॥ ४१३ ॥

पुनश्च कर्मभेदेन छेदानुच्छेदितं क्रमम् ।
वर्णयामि यथा शास्त्रे आचारे गुरुकल्पिते ॥ ४१४ ॥

गुरुर्हि सर्वथा श्रेष्ठो गुरुर्ज्ञानमयो हरः ।
गुरुः शिवमयो नित्यं नमामि गुरुपादुकाम् ॥ ४१५ ॥

शृणु त्वमत्र वक्ष्यामि भागादिनिर्णयक्रमम् ।
विमानमालिनीतत्त्वं यद् गुरोरनुकम्पया ॥ ४१६ ॥

कूर्मपीठान्तरे रम्यं कोणकादि यथा क्रमे ।
पंचकर्म तथा कुर्यादनुराहमनर्थकम् ॥ ४१७ ॥

पंचकर्म——

पंचकर्मस्थले किञ्चित् पृथक्कर्म विधीयते ।
शाक्तपीठे तदाकारे वेदभागेन भाजितम् ॥ ४१८ ॥

आद्ये खुरं तथा कुंभं पक्षभागे मनोरमे ।
वेदभागे तथा प्रस्थे वेदभागे पुनस्तथा ॥ ४१९ ॥

आद्ये खान्दी परे दिव्या वसन्तलतिकावलिः ।
शेषार्धभागयुक्ते च पीठक्षेत्रसमानतः ॥ ४२० ॥

लम्बाकारे मध्यरेखा सन्निधौ* खान्दिमध्यमे ।

* कुंभोर्ध्वे खान्दिमध्यगे

क्षुद्रच्छेदानुवर्त्ते च पुष्पिकावलि* रुत्तमा ॥ ४२१ ॥

* पुष्प पट्टिं

एतैर्भेदैश्च संयुक्तं पंचकर्मस्थलावधि ।
तत्परे कोणके भेदे शृणु जांघस्य निर्णयम् ॥ ४२२ ॥

विमानमालिनी श्रेष्ठा सौधिकागमभेदतः ।
सर्वांशे मुख्यरूपेण विमानमात्रखोदनम् ॥ ४२३ ॥

कोणके च तथाऽनर्थे राहो गर्भक एव च ।
सर्वभागोपरि स्थाने* विमानं कर्म चोत्तमम् ॥ ४२४ ॥

* केवलं दृश्यभागेन

कोणक:——

शृणु त्वमाद्यच्छेदानां कोणकभागनिर्णयम् ।
अनुक्रम्य थानर्थराहादिकं यथाक्रमम् ॥ ४२५ ॥

विमानमध्य देशे च खान्दी प्राचीरसन्निधौ ।
प्रथमपंक्तिमूलस्य भागं शृणु सुयत्नतः ॥ ४२६ ॥

पंचकर्मोत्तरे स्थाने केनाकारेण कारयेत् ।
ऊर्ध्वं प्रस्थस्य यो भागः शृणु त्वं सावधानतः ॥ ४२७ ॥

गर्भमन्दिरमुच्चं यत् कल्पितं गगनं प्रति ।
तदर्धभागयुक्ता च जांघभित्तिः तदाकृति ॥ ४२८ ॥

तदनुसारतो जांघयुगभेदेन प्रस्थतः ।
आद्यभागे तथा निम्ने पंचकर्म च पूर्ववत् ॥ ४२९ ॥

पक्षभागो तथा पक्षे भाजयेत् निम्नबन्धनाम् ।
अपरार्धे वेदभागे योजयेत् वल्लिभीः प्रति* ॥ ४३० ॥

* वल्लिभिः कृते

तद्भागे केवलं छेदः वल्लिभिः गुणभूषणम् ।
तत्पार्श्वे केवलं छेदः मध्ये वल्लभिभूषणम् ।
वल्लभ्यन्ते तथा युगे पक्षभागेन पूर्ववत् ॥ ४३१ ॥

ऊर्ध्वैकभाग ऊर्ध्वे च कथिता ऊर्ध्वबन्धना ।
तदूर्ध्वे बन्धना निम्ने कामबन्धः स उच्यते ॥ ४३२ ॥

एते तु प्रस्थभेदाः स्युः शृणु लम्बाकृतेः गुणाः ।
मध्यजाघं महाक्षेत्रं ऋतुरेखासु भाजयेत् ॥ ४३३ ॥

समुद्रगृहमध्ये च जांघमध्यः त्रयो गुणाः ।
संलग्न अपरो भागः पट्टिक्षेत्रः स जायते ॥ ४३४ ॥

तत् संलग्नद्विभागे च पार्श्वे संकीर्णजांघयोः ।
मूलान्तदैर्घ्ययुक्ते च केवलं पट्टिप्रस्तरः ॥ ४३५ ॥

एते च मुख्यभागाः स्युः दैर्घ्ये च प्रस्थमेव च ।
अपरं संप्रवक्ष्यामि उपभागादिनिर्णयम् ॥ ४६६ ॥

पंचकर्मान्तरे क्षेत्रे मुख्यतो निम्नबन्धना ।
भाजयेत् ऋतुभागेषु* मध्य पार्श्वादि केवलम् ॥ ४३७ ॥

* ऋतुकीलेन

मध्य लम्ब जांगपट्टि खोदयेन्न कदाचन ।
केवलपाशर्वे मध्ये च ऋतुभागेषु छेदयेत् ॥ ४३८ ॥

आद्यभागे दिव्य पट्टि पीठं पद्मदलाकृतौ ।
पक्षभागे तदूर्ध्वे च प्रस्थांगक्रमनिर्णयः ॥ ४३९ ॥

तदूर्ध्वलम्बभागेन ऊर्ध्वे जांघस्तथा दृढ़ः ।
केवलं मध्यजांघे तु नानाकारे लतागुणाः ॥ ४४० ॥

किञ्चित् बृहत्तरोभागो लम्बाकारे तथा पुनः ।
तदूर्ध्वे भागछेदादि कर्मांग ऊर्ध्वबन्धना ॥ ४४१ ॥

डमरुखान्दी स ख्यात ऊर्ध्वक्षेत्रे च पट्टिका ।
पट्ट्यन्ते पद्मपीठं च एषो हि क्रमनिर्णयः ॥ ४४० ॥
तदूर्ध्वे लम्बभागः स्तंभाकारे तथा पुनः ।
तदूर्ध्वभागे छेदादि कर्त्तव्यं ऊर्ध्वबंधना ॥ ४४१ ॥

पूर्वक्रमे ऊर्ध्वदेशंमृतुभागेषु भाजयेतः ।
गुप्तगृहे तथा निम्ने काममूर्तिः सुशोभना ॥ ४४२ ॥

तद्गुप्तभूमिभागांश्च शृणु त्वं विषयक्रमात् ।
आद्ये निम्नं पट्टिक्षेत्रं तदूर्ध्वे पीठखोदनम् ॥ ४४३ ॥

तदन्ते वेदभागेन कुम्भी कुम्भमनोहरे ।
कुंभमध्ये पट्टितत्र बाणे कुंभार्धमंडलम् ॥ ४४४ ॥

ऋतुभागे तथा पट्टिःसमुद्रे कुभिकास्थलम्* ।
केवलं मध्यपार्श्वे च ऊर्ध्वबन्धनखोदनम् ॥ ४४५ ॥

* तदूर्ध्वे शिखरस्थलम्

केनचित् शिल्पिना मुख्ये मध्यजांघमनोहरे ।
खोदयेत् सकलच्छेदभेदादि जांघकर्मयोः ॥ ४४६ ॥

उभयपार्श्वजांघेन न छेदकुंभिकादयः ।
तत्र न विकलं याति जांघकर्म भित्तिस्थले* ॥ ४४७ ॥

* कदाचन

करणीयं सुयत्नेन जांघकर्म सुकौशलम् ।
बन्धनान्ते यथा भागकोणके शिखरावधि ॥ ४४८ ॥

विमानभाग (कोणक) :—

विमानभागच्छेदांश्च शृणु शिष्य मम प्रिय ।
यथा लम्बाकृतिः भागो बाणधा जांघमण्डले ॥ ४४९ ॥

तदा निम्नतरं कृत्वा* शिखरे तु प्रयत्नतः ।
भित्तेश्च निगमांशे च शिखरोच्चं सुशोभनम् ॥ ४५० ॥

* क्रम संकुचितं कुर्यात्

प्रस्थाकारे कार्यभेदे वसुच्छेदानि छेदयेत् ।
कल्पितरेखयुक्तायां छेदभागसमानतः ॥ ४५१ ॥

प्रथमा दीर्घपट्टयंगे वल्लभिः मालिकावलिः ।
पक्षभागे समाने च किञ्चित् न्यूना च मध्यमे ॥ ४५२ ॥

उभयभूमियुक्तेन पद्मरेखादि यत्नतः ।
वेदभागे तथा न्याये युगलपट्टिका महत् ॥ ४५३ ॥

निम्ने च गुण्डिका दिव्या ऊर्ध्वे दन्तुरिकाकृतिः ।
समानांशे युगांशेन खान्दी एका त्रयांशके ॥ ४५४ ॥

अपरनेत्रभागेन पीठिका कमलाकृतिः ।
दन्तुरिकाकृतिः पट्टिः तदूर्ध्वे पीठपंकजम् ॥ ४५५ ॥

खान्दी अन्तिमभागे च वेदभागे स उत्तमः ।
बाणभागः समानूर्ध्वे नेत्रभागेन भाजयेत् ॥ ४५६ ॥

प्रथमार्धे तथा पट्टी पुष्पाकारे मनोहरे ।
नेत्रांशपद्मपीठञ्च यथा युगे च पीठिका ॥ ४५७ ॥

केवलमूर्ध्वगा बाणे निम्नगा युगपंकजा ।
शृणु ऋत्वंशभागेन यत् पक्षयुतभाजिते ॥ ४५८ ॥

प्रथमे खान्दी ततस्तत्र अपरा पद्मपीठिका ।
पद्मपीठोपरि पट्टिः सूक्ष्मातिसूक्ष्मभागतः ॥ ४५९ ॥

सागरपक्षभागेन प्रथमा पट्टिका तथा ।
अपरा चूलिका तत्र अर्धवर्त्तुलिकाकृतिः ॥ ४६० ॥

मध्यांशे मध्यक्षेत्रे च वर्तुलाकृतिगम्बुजा* ।

* वज्राङ्ग

ललिता कुम्भिका माला सिंहवक्त्रादिशोभिता* ॥ ४६१ ॥
ललितं गम्बुजाकारं सिंहमुखादिशोभितम् ॥ ४६१ ॥

वसुभागस्तथा न्याये (वेद) पक्षभागेन भाजितः ।
प्रथमे च तृतीये क्षेत्रे स्यात् पट्टिका तथा ॥ ४६२ ॥

तदूर्ध्वे* वर्त्तुलाकारे खर्परं चूलिकोत्तमा ।
किञ्चित्क्षुद्राकृतौ ऊर्ध्वे कुंभश्च कलशाकृतिः ॥ ४६३ ॥

* तन्मध्ये

वर्त्तुला रेखमध्ये च वर्त्तुलाकृति* गुम्फना ।
नानाछेदस्तथा न्यासो जन्मानन्दस्य कारकः ॥ ४६४ ॥

* अनलाकृतिः

एतेषां भागमुख्यानां कोणकोर्ध्वविमानिका ।
शिल्पी क्रीडति तत्रैव* गुरोराज्ञानुसारतः ॥ ४६५ ॥

तत्क्षेत्रे

अनुराहः—

कोणकं मध्यजांघस्य प्रस्थार्धं परिमाणतः ।
प्रस्थभागं तथा कृत्वा अनुराहं विचक्षणः ॥ ४६६ ॥

पंचकर्मान्तरस्थानमूर्ध्वे यद् ऊर्ध्वबन्धना ।
तदाकृतौ तथा लम्बा नागस्तम्बः स उच्यते ॥ ४६७ ॥

पागान्ते कुत्रचिन्नागः कुत्रचित् लतिकाकृतिः ।
स्तम्भाकारे तथा अंश अनुराहः स कथ्यते ॥ ४६८ ॥

तद्भागं दैर्घ्ययुक्तेन सप्तभागेषु भाजयेत् ।
आद्ये च प्रांतभागे च केवलं डमरूपमा ॥ ४६९ ॥

मध्यांतबाणभागेन लतिका वर्तुलाकृतिः ।
खोदयेत् सुप्रयत्नेन पार्श्वे पट्टिं मनोरमाम् ॥ ४७० ॥

निम्नभागे न्यूनस्थाने डमरूपीठमुत्तमम् ।
तत्स्थानं भाजयेत् बाणे मध्यभागं सुकुञ्चितम् ॥ ४७१ ॥

आद्ये ऊर्ध्वे तथा पुष्पं वर्त्तुलाकृतिगुण्डिका ।
तन्निम्नपक्षभागं च पद्मपत्रादि भूषयेत् ॥ ४७२ ॥

विपरीतदिशि मुखनिम्ने च ऊर्ध्वदेशतः ।
वेद* संकीर्णभागस्तु बला वा वर्त्तुलाकणिः ॥ ४७३ ॥

* मध्य

एतैः छेदैश्च संयुक्तः स्तम्भः स्यात् सुन्दराकृतिः ।
नानालंकारन्यासांश्च पागमध्ये च स्थापयेत् ॥ ४७४ ॥

पार्श्वपट्टिसमायुक्ते वर्त्तुलाकारगुण्डिका ।
रंगणीपट्टिं तां कुर्यात अथवा गोधूमाकृति ॥ ४७५ ॥

लताबन्धे तथा रम्ये मध्यभागे सुनिश्चिते ।
कर्तव्यं श्रेष्ठरूपेण भुजंगबन्धनं शृणु ॥ ४७६ ॥

भुजंगबन्धः—

पंचकर्मान्तरे दैर्घ्ये जांघशीर्षस्थलावधि ।
प्रस्थार्धपरिमितेन स्तम्भ तत्र न संशयः ॥ ४७७ ॥

पूर्ववत् प्रस्थभागेन समुद्रभागमाचरेत् ।
मध्बबाणगृहं यत्र नागस्तमभः तथोपरि ॥ ४७८ ॥

बाणभागं तथा दैर्घ्ये वेदभागेन भाजयेत् ।
पार्श्वे निम्नतरस्थाने क्षीणाकारे समानतः* ॥ ४७९ ॥

*क्षीण पट्टिं समानतः

निम्ने यत् प्रथमस्थानं तद्भागे सिंहमस्तकम् ।
विकटाकृतिनेत्राणि नासिकां मुखगह्वरम् ॥ ४८० ॥

पक्षभागेन मध्ये च डालिकापल्लवाकृतिः ।
ऋतुभागे तथा न्यासेत् सर्पराजं शिरोपरि ॥ ४८१ ॥

समुद्रभागयुक्ते च समांशे वसु भाजयेत् ।
प्रस्थे कल्पितरेखायां छेदांगं यत्नतः शृणु ॥ ४८२ ॥

तदंशे कुञ्चितो वेदो ऋतुभागस्तथैव च ।
युगबाणस्थले कुंभम् अमलक्याकृतौ गुणाः ॥ ४८३ ॥

नानालंकारयुक्तं च छेदयेत् मध्यपल्लवम् ।
पक्ष समुद्र अंशेन किंचित् कुंचितभागयोः ।
गुण्डिकां सह तद् भागं कारयेत् सुप्रयत्नतः ॥ ४८४ ॥
तदन्ते शृणु भेदांश्च मध्यच्छेदत्रयं तथा ॥ ४८४ ॥

तद्भागयुगभागे च कल्पितं प्रस्थमुत्तमम् ।
सर्वोच्चे युगभागेन नागमस्तकखोदनम् ॥ ४८५ ॥

फणायुक्ते तथा रम्ये यावत् प्रस्थं तथाचरेत् ।
फणागर्भे महानागं द्विभुजं मणिमण्डितम् ॥ ४८६ ॥

हलञ्च मुसलं हस्ते कटिदेशावधि तथा ।
हारकेयूर शीर्षे च मुकुटं मणिमण्डितम् ॥ ४८७ ॥

कदाचित् युग्मभेदेन कारयेन्नागमुत्तमम् ।
वेदभागे तथा देहे वक्राकारे मनोहरे ॥ ४८८ ॥

निम्नभागे तथा पुच्छं समभागे च कुण्डलीः ।
अपरं च तथा न्याये वदनं विपरीताकृति ॥ ४८९ ॥

पुच्छाग्रमूर्ध्वगामी च मध्यभागानुसारतः ।
सर्वांगे खोदयेत् चर्म वर्त्तुलाकृति यत्नतः ॥ ४९० ॥

नेत्रे जिह्वा तथा फेनं फूत्कारदृश्यमाचरेत् ।
एवं कृत्वा तथा नागबन्धं स्तम्भस्थलोपरि ॥ ४९१ ॥

रक्षां कुर्वन्ति प्रासादं नागलोकगणास्तथा ।
प्रतिपागान्तरे रम्ये नागमातादिखोदनम् ॥ ४९२ ॥

कुलिशादिभुजंगानां संतोषो जायते ध्रुवम् ।
एतद् विधिक्रमे शिल्पी नागस्तम्भांश्च कारयेत् ॥ ४९३ ॥

शृणु त्वमपरं पागं अनर्थस्थलमुत्तमम् ।
यथाकारं तथा स्थानं तद्दैर्घ्यप्रस्थमेच च ॥ ४९४ ॥

छेदभेदाश्च तन्निम्ने आद्यन्तमध्यदेशतः ।
अक्षुण्णकर्मयुक्तं च यथा पूर्वे च कोणके ॥ ४९५ ॥

बन्धना पंचकर्मान्ते जांघं तत्र मनोहरम् ।
जांघान्ते बन्धना प्रस्थेतस्योर्ध्वे शिखरे तथा ॥ ४९६ ॥

यथा पूर्वे तथा छेदक्रिया तदनुसारतः ।
छेदानुसारतो भेदम् अलंकाराणि कारयेत् ॥ ४९७ ॥

कामकला तत्त्वम्——

प्रसंगभेदयुक्तेन कामबन्धस्य निर्णयम् ।
प्रवक्ष्यामि शृणु त्वं तु शिल्पविद्यानुसारतः ॥ ४९८ ॥

मूलं तु जगतः कामः कामाद् भूतादि जायते ।
मूलभूतस्तथा भूतः कामेन प्रविलीयते ॥ ४९९ ॥

शिवशक्तिंविना सृष्टिः कल्पनामात्रमेव हि ।
न हि जन्मादिवा मृत्युस्तथा कामक्रियां विना ॥ ५०० ॥

शिवः साक्षाद् महालिंगं शक्तिर्भगस्वरूपिणी ।
तद्योगेन जगत् सर्व कामक्रिया सा उच्यते ॥ ५०१ ॥

इति कामकला विद्या आगमे तत्त्वविस्तरः ।
स्थानं कामकलाहीनं त्यक्तमंडलमुच्यते ॥ ५०२ ॥

कौलाचारमते हीनं सर्वदा त्यक्तमंडलम् ।
कालकक्षसमं त्यक्तं तत्स्थानं गहनोपमम् ॥ ५०३ ॥

विना कामकलायंत्रपूजनं शक्तिपूजनम् ।
साधनं निष्फलं यान्त हस्तिस्नानमिव क्रिया ॥ ५०४ ॥

यत्र तिष्ठति तद्यंत्रं तद्गृहं वीरमन्दिरम् ।
सर्वविघ्नभयादीनां विनाशो जायते ध्रुवम ॥ ५०५ ॥

भूतप्रेतपिशाचादि कौणपं विकटादयः ।
दूरादेव पलायन्ते यंत्रमात्रस्य दर्शने ॥ ५०६ ॥

श्रृणु त्वं कथयिष्यामि गोपनीयं प्रयत्नतः ।
कौलाचारं विना यंत्रं नैव देयं कदाचन ॥ ५०७ ॥

कामकलायंत्रम् :––

चतुरस्रे वीरभूमिः विषमं सममेव च ।
चतुर्वर्गं महाक्षेत्रे करणीयं कील द्वयम् ॥ ५०८ ॥

ऊर्ध्वप्रस्थे तथा कीलछेदनं मणिकागृहे* ।
मणिबिन्दुं समारम्भ्य ऊर्ध्वं* भगाकृतिस्तथा ॥ ५०९ ॥

* कोण छेदद्वयं तथा
*क्षेत्रः

दैर्घ्यं निम्नस्थलारभ्य मणिबिन्दुस्थलावधि ।
लिंगाकारं लिंगपीठं* बिन्दूर्ध्वे मणिका तथा ॥ ५१० ॥

* क्षीणपीठं

मणिकाया ऊर्ध्वदेशे कामबिन्दुस्वरूपिणी ।
कन्दाकारस्तथा बिन्दुः सर्वसिद्धिप्रदायकः ॥ ५११ ॥

तदन्ते न्यासयुक्तेन भगांशा षोड़शात्मकाः ।
योजयेत् लिंगयुक्तेन कीलद्वारे मनोहरे ॥ ५१२ ॥

तत् षोडश महाशक्तिः* सर्वा योनिकृताः स्वयम् ।
केवलं कीलयुक्तं च लिंगयुक्तं भवेत् कलाः ॥ ५१३ ॥

* कला क्षेत्रः

कस्माद्भेदात् कलाक्षेत्रं पंचदशाक्षमुख्यतः* ।
योजयेत् कील युक्तेन लिंगक्षेत्रविधानतः ॥ ५१४ ॥

* चतुर्दश

केनाकारे योनि रूपा* त्रिभुजात्मिका सा कला ।
संलग्नयोगयुक्तेन यंत्रे सम्भवति ध्रवुम् ॥ ५१५ ॥

* तथा क्षेत्रे

प्रथमावरणं चोर्ध्वे आद्ये या योनिपीठिका ।
तद्भागं कारयामास योनिक्षेत्रचतुष्टयम् ॥ ५१६ ॥

ऊर्ध्वदेशे तु कर्त्तव्यं कीलच्छेदद्वयं तथा ।
निम्नबिन्दुं समारभ्य कोणच्छेदावधिं चरेत् ॥ ५१६ ॥

कामेशी प्रथमा शक्तिर्द्वितीये भगमालिका ।
वेदे च नित्यक्लिन्नायां भेरुण्डायां युगांशके ॥ ५१७ ॥

वामार्धे वेदक्षेत्राणि आद्ययोनिगता गुणे ।
महावज्रेश्वरी निम्ने तत्पार्श्वे शिवदूतिका ॥ ५१८ ॥

तत्पार्श्वे कोणदेशे च चिच्छक्ति वन्हिवासिनी ।
निम्नवामवर्गभूमौ कीलयुक्ते मनोहरे ॥ ५१९ ॥

मणिक्षेत्रगता रेखा विभागीकृतपीठिका* ।
तत्र वज्रेश्वेरी पार्श्वे अपर* भागवर्त्तिनी ॥ ५२० ॥

* विभागीकृतक्षेत्रकान् * वाम

त्वरिता वज्रेश्वरी मित्रा नित्या शक्तिकलात्मिका ।
कुलसुन्दरी च तन्निम्ने त्वरिता वामभागिनी ॥ ५२१ ॥

त्वरिता पीठिका सव्ये नित्या शक्तिः कलात्मिका ।
कुलसुन्दरी तथा वामे त्वरिता वामचारिणी ॥ ५२१ ॥

एतावत् क्रमरूपेण दक्षिणांशे* मनोहरे ।
भगपीठं महाक्षेत्रं केवलम् ऋतुसंख्यकम् ॥ ५२२ ॥

* पार्श्वदेशे

कीलपताका सा शक्तिर्लिङ्गस्य दक्षिणांशके ।
तदूर्ध्वं योनिपीठांशे कामांगी ज्वालमालिनी ॥ ५२३ ॥
ज्वालमालिनीं तद्वामे न्यसेद् विध्यनुसारतः ।

विजया निम्न* भागे च सर्वदा सहचारिणी ।
मणिपीठस्य पक्षान्ते शक्तिः कामकलेश्वरी ॥ ५२४ ॥

* ऊर्ध्व

तत्पार्श्वे दक्षिणे दिव्ये त्रिपुरासुन्दरी तथा ।
अशक्तिः सा महाकामे सा भैरवप्रिया सदा ॥ ५२५ ॥
भैरवीमूर्ध्वदेशे च विजयां सह विन्यसेत् ।

शक्तयः षोडशैताः स्युः देवी* कामकलात्मिका ।
वर्गक्षेत्रे च बाह्ये च बाह्यावरणयोगिनी ॥ ५२६ ॥

* सर्वाः

ऊर्ध्वे मध्ये निर्भरा च वामकोणे रहस्यका ।
कूलोत्कीर्णा वाममध्ये अतिरहस्य कोणके* ॥ ५२७ ॥

* तत्तले

निम्नमध्ये संप्रदाया कोणे गुप्ततरंगिका ।
गुप्तयोगिनी मध्ये च निगर्भा ऊर्ध्वदक्षिणे ॥ ५२८ ॥

एतानि योगिनीक्षेत्रं कलाक्षेत्रं विशेषतः ।
कंददेशे परा शक्तिर्महाकामकलेश्वरी ॥ ५२९ ॥

महाकामकलेश्वरी ध्यानम् :—

विचित्रवसना सौम्या मत्तमातंगरूपिणी ।
सर्वदा रमणे मत्ता ज्योतिर्मंडलमध्यगा ॥ ५३० ॥

पंकजंपुष्पपाशञ्च योनिमुद्राधरा शुभा ।
कोदण्डो वामभागे च दक्षिणे किंशुका कलिः ॥ ५३१ ॥

अक्षमालाधरा देवी वराऽभयप्रदायिनी ।
कामपंचशराः तीक्ष्णा अनंगमदनातुरा* ॥ ५३२ ॥

* पीडितातुरा

शिवः कामकलेश्वर :—

तन्निम्ने मणिदेशे च शिवः कामकलेश्वरः ।
ईषत् श्यामांगगंभीरः योगासनधरो विभुः ॥ ५३३ ॥

सर्वदा मिथुनासक्तः सह कामकलेश्वरीम् ।
आज्ञाचक्रसमारूढो रजःपानरतः सदा ॥ ५३४ ॥

चीवरचिन्हयुक्तायां योगी कामकलेश्वरः ।
कामकलामहायंत्रं अधिपः कृष्णशंकरः ॥ ५३५ ॥

ऐतद् गोप्यतमं यंत्रं सर्व*रक्षार्थमुत्तमम् ।
प्रत्यक्षशक्तिदं साक्षात् सर्वसिद्धिप्रदायकम् ॥ ५३६ ॥

* स्थल

प्रासादे शक्तिपीठे च रुद्रपीठे स्थलोत्तमे ।
ऐतद् यंत्रं ध्रुवं न्यासं तत्कीर्तिरचला भवेत् ॥ ५३७ ॥

गोप्यं गोप्यतमं यन्त्रं सर्वेभ्यो नैव दर्शयेत्* ।
तदर्थे यंत्रछेदेन मिथुनं मूर्त्तिखोदनम् ॥ ५३८ ॥

* दर्शयेन्नेतरान् जनान्

कौलाचारमते रम्ये जांघे भित्त्यपरांशके ।
स्थापयेत् कामबन्धानां जनस्यानन्दकारणात् ॥ ५३९ ॥

कामबन्धः सदा युक्ते अनर्थपागमुत्तमम् ।
यदाकारे कोणकाद्याः तथा च शिखरावधि ॥ ५४० ॥

समोच्चसमभागेन समच्छेदानुसारतः ।
आचरेद् विधिपूर्वेण अनर्थम् पागमुत्तमम् ॥ ५४१ ॥

राहा——

श्रृणु सा खान्दिका रम्या राहापार्श्वे विशेषतः ।
स्तम्भानुपात तद्गुणा भूमिच्छेदानुसारतः ॥ ५४२ ॥
स्तंभानुपात भागे च वल्लिः पङ्क्त्यनुसारतः ।

अनर्थस्य यथा प्रस्थे द्विगुणं तस्य मध्यमे ।
राहास्थानं परं दिव्यं द्विधा शिखरमालिनी ॥ ५४३ ॥

यथा पूर्वे पद्मगर्भे तथा निम्नांशभेदयोः ।
कारयेत् सुप्रयत्नेन तद्भागानुश्रुते तथा ॥ ५४४ ॥

तथाकारेण निम्ने च पंचकर्मादिकं क्रमात् ।
गर्भकं च निशास्तम्भे लता दिव्या सुशोभना ॥ ५४५ ॥

पीठारभ्यंनिशाशेषे यावदूर्ध्व वसन्तिका ।
यावत् स्थानं तथा पूर्वे पद्मगर्भानुसारतः ॥ ५४६ ॥

राहागर्भकम्——

श्रृणु त्वं मुख्यभेदांश्च शर्षि च गर्भकस्थलम् ।
भेदश्छेदस्तथा कर्म कर्मांगं तत्त्वनिर्णयम् ॥ ५४७ ॥

दैर्घ्याकारे यथा पागे यदुच्चा जांघबन्धना ।
तदुच्चस्थानभेदेन निशोर्ध्वे गर्भकस्थलम् ॥ ५४८ ॥

पार्श्वदेवता——

निशागर्भे तथा न्यास्याः पूर्ववत् पार्श्वदेवताः ।
शक्तिपीठे तदाकारे काली कात्यायिनी तथा ॥ ५४९ ॥

दक्षिणाकालिका उग्रा उग्रचण्डा कपालिका ।
वाराही बगला श्यामा पार्श्वपीठानुसारतः ॥ ५५० ॥

निशाभागान्तरे ऊर्ध्वे केन भागेन गुम्फना ।
छेदादिरेखयुक्तेन वल्लिभिः गुम्फका तथा ॥ ५५१ ॥

क्षीणाकारे अनर्थञ्च यद्वेधे गृहकाकृतौ* ।
द्विगुणांशे भवेत् छेदो राहा पार्श्वांश निर्णयः ॥ ५५२ ॥

* यत् पाश्वे काम मंदिरम्

निशाभागान्ते तदूर्ध्वे आद्यबन्धझरावली ।
खोदयेच्चैव तत्स्थाने तदूर्ध्वे वर्द्धितस्थले ॥ ५५३ ॥

यदाकारे निशाप्रस्थः स प्रस्थः पक्षभाजितः ।
तद् भागस्यैकभागं च चूल क्षेत्रेण योजयेत् ॥ ५५४ ॥

झरापीढ़स्यमारभ्य अनर्थचूलिकां प्रति ।
पागस्य द्विगुणं उच्च राहापागं सुयत्नतः ॥ ५५५ ॥

झरापीढं समारभ्य राहान्ते चूलिकायथा ।
द्विभाग द्विगुणमुच्चं कुर्याद् राहा सुयत्नतः ॥ ५५५ ॥

शृणु तदूपभेदांश्च केनाकारेण भेदयोः ।
भेदयुक्ते ऊर्ध्वभागे श्रेष्ठां विमानमालिका ॥ ५५६ ॥

द्विगुणितं यथा भागं राहविमानगर्भके ।
तत्प्रस्थे च षोडशांशे च भागं कृत्वा समानतः ॥ ५५७ ॥

प्रतिभागे समाकारे षोडशाभ्यन्तरे पुनः ।
समुद्र वाण योगेन द्विगुणं कारयेत् सुधीः * ॥ ५५८ ॥
वाण समुद्र भेदेन द्विभागं कारयेत्तले ॥ ५५८ ॥

पुनरूर्ध्वे युगक्षेत्रं द्विक्षेत्रं द्विगुणाकृतौ ।
नीत्वा तद्द्विगुणं भागे खोदयेत् वज्र मस्तकम्* ॥ ५५९ ॥
पुनरूर्ध्वे तथाक्षेत्रं युग भागः समन्विते ।
तत्क्षेत्रे चूल रूपेण वज्र मस्तक खोदयेत् ॥ ५५९ ॥

निम्नदेशं समारभ्य यावत् हरिमुखावधि ।
प्रतिभागान्तभागानां प्रवक्ष्यामि क्रमान्वये ॥ ५६० ॥

आद्य भागसमायुक्ते लताकारं वसन्तकम् ।
पट्टी चोभयपार्श्वेण रम्यमध्ये गृहन्तथा* ॥ ५६१ ॥

* रम्या लता तथा

पक्षांशे लहरी तत्र निशाभागस्य मूर्धनि ।
वेदपक्षान्वये भागे वीथी पीठान सकुञ्चिते ॥ ५६२ ॥

कुंभककृतितद भाग ऊर्ध्वांशे सुमनोहरे ।
केवलप्रस्थमध्ये च गृहस्तम्भाकृतिर्महत् ॥ ५६३ ॥

तृतीयांशे तथा प्रस्थे तत्स्थानं क्षीणगर्भकम् ।
तत्स्थले भैरव मूर्त्तिरथवा शिवशंकरः ॥ ५६४ ॥

स्थापयेच्च प्रयत्नेन स्तम्भपीठादियुक्तयोः ।
स्तम्भदैर्घ्ये तथा लम्बा वेद युगावधिगृह ॥ ५६५ ॥

तद्गृहे स्थापयेत् शिल्पी गर्भकाधिपशंकरम् ।
युगे समाकारपार्श्वे गृहस्थानान्तरे तथा ॥ ५६६ ॥

सम* भागे कृतो भागः स्थापयेत्तत्र विग्रहम् ।
एकभागे सखी दिव्या अपरे च गवाक्षिका ॥ ५६७ ॥

* युग

क्रमान्वये तथा भागं शृणु बाणांगनिर्णयम् ।
नेत्रभागे तथा क्षेत्रे पट्टिका पद्मपीठिका ॥ ५६८ ॥

ऋत्वांशे समसंकीर्णे पट्टिं निम्ने विचक्षणः ।
पट्ट्यन्ते लतिकाक्षेत्रं वसन्ताकृति सर्वदा ॥ ५६९ ॥

तदूर्ध्वे दीर्घभागानां समुद्रांशः स कथ्यते* ।
दीर्घाकारं पद्मपत्रं पीठिकाकृति निम्नगम् ॥ ५७० ॥

* समुद्राष्ट समन्विते

छेदानुच्छेदयुक्तेन करणीया गुणावलिः* ।
मध्ये यावत् तदा निम्ने गृहे भैरवविग्रहम् ॥ ५७१ ॥

* पत्रकम् * वज्रमस्तकम्

वृत्ताकारे छेद सर्वे, राहे किञ्चित्* दिगावधि ।
सिंहमुखादिमालम्बं मध्ये उच्चतरे तथा ॥ ५७२ ॥

* कुंचित

ग्रहादौ छेदतद्भागे पक्षभागगुणादयः ।
छेदाकारे पद्मपत्रं पट्टिः तस्योर्ध्व जायते ॥ ५७३ ॥

पट्टियुक्ते लतां कुर्यात् वसन्तोर्ध्वे वसन्तकम्* ।
किञ्चित् वर्धयते भागपार्श्वे गुणाकृतौ तथा* ॥ ५७४ ॥

* सकथ्यते * ऊर्ध्वे पट्ट्याकृतेः तथा

तस्योर्ध्वे दिगभागेषु फेणी चार्ध कुंभाकृति ।
प्रस्फुटिता कृता पत्र ऊर्ध्वगा* कुंभिका तथा ।। ५७५ ।।

* अथवा

रुद्रभागे त्रिभागे च प्रथमा निम्नकुञ्चिता ।
तस्योर्ध्वे समभागेन पट्टिकार्यादि वर्द्धितम्* ।। ५७६ ।।

* पट्टिकाद्वय वर्द्धितम्

किञ्चित् लम्बाकृतेः भागवेदे च कलिकावलिः ।
तस्योर्ध्वेदित्य भागेन सिंहपीठानुसारतः ।। ५७७ ।।

एते तु मुख्यवन्धाः स्युः अन्ते च वज्रमस्तकम् ।
सर्वांगसुन्दराः छेदाःकरणीया यथाविधि ।। ५७८ ।।

मध्यद्विवर्त्तुले भागे वर्त्तुलं मंडलं महत् ।
अन्ते च विकटाकारं हरिमस्तकखोदनम् ।। ५७९ ।।

आद्यवर्त्तुलपार्श्वेन र म्याकारे वलिद्वयम् ।
मध्यगुणाकृतस्थाने* सुरम्ये मस्तकं तथा ।। ५८० ।।

* यद् वर्तुलस्थानं

द्वितीयवर्त्तुलं पार्श्वे कलिकाकृतिगुम्फना ।
गुम्फका छेदयुक्ताऽपि प्रथमं मंडलं प्रति ।। ५८१ ।।

उभयप्रस्थपार्श्वेण छेदानां पट्टिकाकृतिः ।
क्रमसकुञ्चिता मार्गे यावत् सिंहमुखावधि ।। ५८२ ।।

नानाछेदं तथा कर्म सुरम्ये गुल्मखोदनम् ।
मध्ये चालम्बिकां दिव्यांततकुर्यात् शिल्पिपंगुवः ।। ५८३ ।।

सिंहमुखे वेधपार्श्वे गर्भकस्थलचुम्बिते ।
तदाकृतिं प्रतिच्छेदं पार्श्वे च विधिपूर्वकम् ।। ५८४ ।।

राहाभागः——

रमणीय कृतो भागः राहा श्रेष्ठांशनिश्चिता ।
विना राहागुणं हीनः प्रासादो विकलो भवेत् ।। ५८५ ।।

राहानुसारसंकीर्णः परिराहविधानतः ।
मंडल* पार्श्वभागेन अलंकाराणि खोदयेत् ।। ५८६ ।।

* निम्नाङ्ग

कुंभाकारे तथा पुष्पे लताकारे विधानतः ।
वाड़भीगर्भयुक्तेन समाकारे* समन्वये ॥ ५८७ ॥

* स्तंभाकारे

रथकरथयुक्तेन राहांशे गम्बुजाकृतौ* ।
खाकरयोगभागेन* तदाग्ने सम्मुखे तथा ॥ ५८८ ॥

* वज्रमस्तकम्

* गर्भ योगेन

खाकरनिम्नपर्यन्ते मुकुटाकृतिगुम्फना ।
सर्वांगसुन्दरा राहा जनमानन्ददायिका ॥ ५८९ ॥

परिराह अनुराहश्च समभूम्यनुसारतः ।
समभागे तथा भूमिःलम्बक्षेत्रे समानतः ॥ ५९० ॥

विमानसमभागेन समकर्मसमन्वये ।
राहा केवलमूर्ध्वांशे सर्वदा गोपुराकृतिः ॥ ५९१ ॥

विषमे वाड़भीक्षेत्रं राहामुखं सजायते ।
एतानि प्रथमावर्त्त विमानमालिनीगृहे ॥ ५९२ ॥

छेदाकारे दीर्घभागे बाणभागान्वये गृहे ।
प्रस्थाकारे तथान्यायं कुञ्चिते पंचधा तथा ॥ ५९३ ॥

केवलं सम्मुखे राहभित्तिभागं न खोदयेत् ।
कोणकं पार्श्वयुक्तेन अनर्थादि यथा कृतम् ॥ ५९४ ॥

मिलनस्थलम्——

राहाभागे प्रस्थदेशे स भागो मिलनस्थलम् ।
विमानवरश्रेष्ठञ्च कन्या च मुखशालिका ॥ ५९५ ॥

वरकन्या यथा स्थाने सम्मुखे सन्धिक्षेत्रजा ।
तदूर्ध्वे कारयेच्चैव राहामर्धस्थले तथा ॥ ५९६ ॥

ऋतुभागस्य चोर्ध्वेन यावत् भागान्तदेशतः ।
तंभागं खोदयेत् रम्ये यावत् सिंहमुखं तथा ॥ ५९७ ॥

एतानि क्रमयुक्तेन चतुःपार्श्वे मनोहरे ।
प्रथमावरणं दिव्यं श्रेष्ठा विमानमालिका ॥ ५९८ ॥

श्रीशक्तिकामरूपा सा सर्वसिद्धिप्रदायिनी ।
अनुकम्पय मां देवि कथयामि सुयत्नतः ॥ ५९९ ॥

शृणु द्वितीयावर्त्ते त्वं गर्भकस्थलमुत्तमम् ।
विमानमालिकावर्त्त समानांशे* विमानिका ॥ ६०० ॥

* समोच्चेन

प्रथमावर्त्त ऊर्ध्वे च कलशादिःसमानतः ।
एकरेखान्वये बन्धः प्रथमावर्त्ते गर्भकम् ॥ ६०१ ॥

यदाकारे जांघक्षेत्रं प्रथमावर्त्तमंडलम् ।
विमानशीर्षभागञ्च तदाकारे कृते पुनः ॥ ६०२ ॥

द्वितीयावर्त्तगर्भस्च तदूर्ध्वे कुञ्चिताकृतिः ।
प्रथमा शीर्षभागेन द्वितीया प्रान्त संस्थिता ॥ ६०३ ॥

प्रांतरेखां समारभ्य यदा समानदीर्घिका ।
अनर्थपार्श्वरेखायां लम्बाकारे समन्वये ॥ ६०४ ॥
प्रांतरेखां समारभ्य कोणकं चार्द्धकुंचितम् ।
अनर्थमर्द्धं तद्रूपं कुंचितं राहकं प्रति ॥ ६०४ ॥

द्विगुणं वर्धयेदूर्ध्वे तद गर्भ पार्श्व एव च ।
लम्बभागसमक्षेत्रे तथा राहा विमानिका ॥ ६०५ ॥
कथंचिद् वर्धयेदूर्ध्वे गृहदेशोपरि तथा ।
केलिबन्धलम्बक्षेत्रं तथाविधे विमानिकः ॥ ६०५ ॥

तदुच्चे समभागेन द्वितीयावर्त्तमज्जुले ।
वसन्तपट्टिमारभ्य यद पूर्वे कथिता मया ॥ ६०६ ॥

पद्मपत्रं तथा चोर्ध्वे रम्ये युगलपट्टिका ।
गुण्डिका दन्तुरिका च पीठिका कमलाकृतिः* ॥ ६०७ ॥

* कलशा तथा

नानाकारे तथा भेदे सिंहमुखादि खर्करे* ।
अक्षुण्णभेदयुक्तेन विमानपक्षवर्त्तिका ॥ ६०८ ॥

* सिंहमुख समाचरेत्

तत्तुल्यसमभागेन कोणकोर्ध्वे विमानिका ।
एष क्रमे अनर्थोर्ध्वे रम्या विमानपालिका ॥ ६०९ ॥

गठयेत् निपुणं शिल्पी यदुक्तं विधिपूर्वकम् ।
सुदृढ़े द्वितीयावर्त्त विमाने पालिकावलिः ॥ ६१०॥

गर्भकदेश :—

श्रृणु त्वं गर्भदेशन्तु केनाकारेण कारयेत् ।
पृथक रीति श्रृणु अत्र न पागः कोणकादयः ॥ ६११ ॥

न अनर्थस्तथा राहा भिन्नाकारे च मध्यमे ।
विमानगठनान्ते च गर्भके* खान्दिमुत्तमाम् ॥ ६१२ ॥

* न्यून कारयेत्

तन्मध्ये त्रिभुजाकारे अलसा नारी स्थापयेत् ।
दीर्घाकारे तथा मध्ये स्तंभोर्ध्वे खान्दिकाकृतौ ॥ ६१३ ॥

विमाना अलसा नारी समरेखा च जायते ।
दर्पणा चामरा लेख्या विचित्रा डालमालिका ॥ ६१४ ॥

नानाकारे गर्भदेशे नारीबन्धः स उच्यते ।
नारीबन्धान्तराले च द्वितीयावर्त्तमण्डना ॥ ६१५ ॥

द्वितीयावर्त्त एतानि ऊर्ध्वे च खान्दिमुत्तमाम् ।
गर्भको वेढ़ स नाम्ना ख्यातो भागो न संशयः ॥ ६१६ ॥

तदुचच निम्ने ऊर्ध्वे वा विमानमौली शोभना ।
भाजयेद् वेदभागेषु उच्चवेढ़ः स जायते ॥ ६१७ ॥
तद बेढ उच्च भेदेन भागत्रयसमन्वितः ।
निम्नभित्थे तथा फेणी जालीदेशो यथाक्रमम् ॥ ६१७ ॥

प्रस्थे यत् कुम्भिकास्थानं समोच्च पक्षवर्त्तिका ।
तदूर्ध्वे पक्षभागेन समाकारे समन्वये ॥ ६१८ ॥
प्रस्थे तत् फेणिकास्थानं वर्द्धिता वेदवर्तिका ।
तन्निम्ने भित्तिदेशे च ऊर्ध्वे जालीसमन्वये ॥ ६१८ ॥

कणितुल्यं चतुःपार्श्वे सिंहदन्ताकृति ध्रुवम् ।
एतानि आद्यभागांशे तदूर्ध्वे द्विगुणाकृतिः ॥ ६१९ ॥

खान्दीभित्तिः समनिम्ने कणिबेढ़ान्तरे तथा ।
दान्ती वेढ़स्य निम्नांशे गर्भके पद्मपल्लवे ॥ ६२० ॥
खान्दी भित्ति समायुक्ते नानाबंधं समाचरेत् ।

दान्तीनिम्ने तदा रेखा ऊर्ध्वे कंठस्थलाकृतिः ।
क्वचित् दान्तीगुणाधारे खोदयेत् पद्मपल्लवम् ॥ ६२१ ॥

कंठदेशे तदा मूर्त्तिः नानाकारे गवाक्षिकाः ।
कंठदेश प्रसादस्य गंभीरं सर्वथा महत् ॥ ६२२ ॥

खर्परभेद––

तदूर्ध्वे खर्परदेशं नानालंकारभूषितम् ।
सदेशो मुख्यदेशस्तु* युगभागे विशेषतः ॥ ६२३ ॥

* मुख्यमुच्चेन

सुरम्यस्थानभेदेन मुद्रकस्थलमुत्तमम् ।
प्रासाद ऊर्ध्वदेशे च पाषाणवरसन्निभः* ॥ ६२४ ॥

* योगतः

छंदाकारे गर्भदेश उपर्युपरि संस्थितः ।
शिलोपरि तथा भागे अपरोर्ध्वाणि योजयेत्* ॥ ६२५ ॥

* मुद्रकाकृतिमाचरेत्

तत् शिलासमरूपेण अन्यशिलार्ध वर्दयेत् ।
प्रतिशिला पार्श्वदेशे रंध्रं कृत्वा विधानतः ॥ ६२६ ॥

रंध्रयुक्ते शलाकायां द्विमुखं ताम्रनिर्मितम् ।
अतिदृढ़ातिरूपेण गर्भकस्थलनिर्णयम् ॥ ६२७ ॥

शलाकाछन्द युक्तेन ऊर्ध्वदेशे समन्वये ।
दृश्यभेदे सर्वभेदो जायते दृश्यसंकुलम् ॥ ६२८॥
यथा अच्छिद्ररूपेण दृश्यं च एकवत् तथा ॥ ६२८ ॥

केवलं गर्भयुक्तेन दृढ़प्रासादमंडनम् ।
अन्तदेशे दृढ़छन्दो राहे दृढविमानिका ॥ ६२९ ॥
मध्यदेशे तथाछंदे राहे फेणी विमानिका ।

अन्तर्बाह्ये सदा रम्यं* सर्वालंकारसंयुतम् ।
नानाभूषणभूषायं कन्दर्पसुन्दरछबिम् ॥ ६३० ॥

* पट्टे

गुणहीना यथा हीना तेन गर्भस्थलक्रिया ।
शृणु त्वं युगभागस्य गुणछेदादिनिर्णयम् ॥ ६३१ ॥



एन ४१३३–१९

केनाकारे केनभागे खोदयेत् मुद्रकरस्थलम् ।
यदुच्चनिम्न आवर्तो विमानादि च दैर्घ्यके ॥ ६३२ ॥

यदुच्च कटंदेशान्तं यावत् सिंहस्तथोपरि ।
प्रस्थदेशे किंचित न्यून कुञ्चिता गौव्हराकृति* ॥ ६३३ ॥

* गोमुखाकृतिम्

लम्बाकारे तथा प्रस्थं ऋतुधा समभाजयेत् ।
मध्यद्विभागसाम्येन एकभागस्तथोपरि ॥ ६३४ ॥

पार्श्वे गुणादिभागे च जायते कुञ्चिताकृतिः ।
सम्मुखे पृष्ठदेशे च तन्न्याये पंचधा कृता ॥ ६३५ ॥

समभागे समाने च मुखटा ऊर्ध्ववर्त्तिका* ।
पक्षभागान्वये चूलः पंचधा प्रस्थभागतः* ॥ ६३६ ॥

* वर्द्धितम् * पंचफेणीसमन्वितम्

केवलं कोणकपार्श्वे विचित्रविग्रहादिभिः ।
मध्यस्थाने द्वयोः पार्श्वे केरिकार्यं मनोहरम् ॥ ६३७ ॥

केरि वा छेद भेदाश्च नानाकारे तथा गुणे ।
तदूर्ध्वे पक्षयुक्तेन न खोदयेत् कोणकद्वये ॥ ६३८॥

केरकर्म :—

शृणु त्वं संप्रवक्ष्यामि केरकर्म सुकौशलम् ।
आड़केरि यथा प्रस्थे* तदन्ते पद्मपत्रवत् ॥ ६३९ ॥

* ठियाकेरी च ऊर्ध्वगे

कुंचिता वलि तन्मध्ये त्रिवलिश्चोर्ध्वमंडले ।
मध्ये कुंमं तथा निम्ने पल्लवादि विमंडयेत् ॥ ६४० ॥

कोणे च पल्लवं दिव्यं नानालंकारभूषितम् ।
निम्ने तत्तुल्यभेदेन मुखटा शशिमंडलम् ॥ ६४१ ॥

मध्यदेशान्तरे पार्श्वे मण्डयेत् रासमूर्त्तिभिः ।
रामकृष्णादिभेदेन रास-कामकलाः क्रियाः ॥ ६४२ ॥

प्रति आवर्त्तिका मध्ये क्षुद्राकारत्रिकोणिका ।
तन्मध्ये खोदयेत् रम्ये पुष्पादिकलिकादयः ॥ ६४३ ॥

द्वितीय* पार्श्वभागेन पूर्ववत् कर्म* कौशलम् ।
पार्श्वद्वये च ऊर्ध्वे च त्रिवलि अतिशोभिता ॥ ६४४ ॥

* उभय * केरि

वलिदेशान्तरे तुल्ये ऊर्ध्वे वेदगृहं तथा ।
प्रस्थयुक्ते* तदा भागपार्श्वे तु पंचधाकृते ॥ ६४५ ॥

* मध्य क्षेत्रे नानापुष्पाकृतिं चरेत्

मुद्रकभाग :—

आद्यभागे तु या मुद्रा पार्श्वे मुद्रकगंभीरा ।
वृत्तकारे ऊर्ध्वे भागे खर्पराकारमुद्रकम् ॥ ६४६ ॥
प्रांतभागे च यो मुद्रः पिच्छिलः पीढ़ आकृतिम् ।

कोण व्यतीतभागेन पार्श्वे च किन्नरादयः ।
उड्डीयमानदृश्येन चतुःपार्श्वेषु खोदयेत् ॥ ६४७ ॥

गेलबाईचूलिभागे देशाचारे स कथ्यते ।
गुंफना मध्यभेदेन लम्बाकारे च मध्यमे ॥ ६४८॥

मूलमध्यान्तयुक्तेन खाकरं गर्भकं तथा ।
वेदभागान्तभूमिं तु ऋतुभागेषु भाजयेत् ॥ ६४९ ॥

श्रृणु त्वमुपभेदांश्च आदिमारभ्य यत्नतः ।
आद्यभागो नेत्रभागः पट्टी निम्ने च पीठवत् ॥ ६५० ॥

तदुच्चे निम्नक्षेत्रं स्यात् खान्दीगर्भं मनोहरम् ।
पक्षभागः खान्दियुक्तः तद्रूपो गर्भकोदरः ॥ ६५१ ॥

वेदे तथोर्ध्वदेशेतु खान्द रेखानुसारतः ।
भागेऽपरे समायुक्ते पट्टी रम्यं वसन्तकम् ॥ ६५२ ॥

लतापत्रादियुक्तं स्यात् क्षुद्राकारे पुनः पुनः ।
युगभागे द्वयोः अंशे मध्यरेखावलम्बने ॥ ६५३ ॥

चूलिकाकृतिछेदेन ऊर्ध्वरेखागुणादयः ।
बाणभागात् द्वयोः पार्श्वे लताकारेण चन्द्रिका ॥ ६५४ ॥

केवलं मध्यभागेन पद्मरेखावलिर्बलिः ।
मध्यपट्टिद्वयोर्भागे अर्धाकारे वलिस्तथा ॥ ६५५ ॥

खोदयेत कमलं दिव्यं अर्धवृत्ताकृतौ तथा ।
पार्श्वत्रिकोणस्थानेन लता दिव्यजलाकृतिः ॥ ६५६ ॥

एते तु गुणभेदाः स्युः श्रृणु देशांगनिर्णयम् ।
शीर्षदेशे समाने च न भित्तिः न च गर्भके ॥ ६५७ ॥

पार्श्वस्थमध्यभागेन सिंहो मकरिकाकृतिः ।
द्वयोः पार्श्वे मध्यभागे उद्यता हरिमूर्त्तयः ॥ ६५८॥

मूलदेशं समारभ्य खाकरं गर्भकं यथा ।
भूमि भागोपरि भूमिं तद् भागं ऋतुभाजयेत् ॥ ६४९ ॥

श्रृणु त्वं उपभेदांश्च आद्यमारभ्य यत्नतः ।
आद्यभागं नेत्रभागे पट्टिनिम्ने पीठोर्द्धये ॥ ६५० ॥

तदूर्ध्वं निम्नरूपेण खान्दीगर्भं मनोहरे ।
पक्षभागे खान्दीक्षेत्रं सख्यतः गर्भकोदरः ॥ ६५१ ॥

वेदे तथोर्ध्वदेशे च खान्दीरेखाश्च मध्यगाः ।
अपरे चैव भागे तु पट्टी रम्यं वसंतकम् ॥ ६५२ ॥

युगभागे द्वयोरंशे मध्यरेखावलम्बने ।
लतादिपत्रयुक्तं च पट्टिक्षेत्रोपरि तथा ॥ ६५३ ॥

अथवा चूलिराद्ये च, ऊर्ध्वबाणे पीढाकृते ।
बाणाभागात् मुखे पृष्ठे लताकारेण चन्द्रिकाम् ॥ ६५४ ॥

केवलं पार्श्वभागेन पद्मरेखावलिं तथा ।
मध्यपटस्थले फेणी रेखात्रयसमन्विते ॥ ६५५ ॥

तलेगर्भाकृतिः स्थाने खान्दीमध्ये जलाकृतिः ।
खोदयेत् कमलं मध्ये अर्द्धवृत्ताकृतौः तथा ॥ ६५६ ॥

एते तु गुणभेदाः श्रृणु स्युः चोर्ध्वाङ्गनिर्णयम् ।
शेषदेशे समान च न भित्तिः न च गर्भकम् ॥ ६५७ ॥

संमुखे पृष्ठभागेन सिंहो मकरिकाकृतिः ।
द्वयोः पार्श्वे मध्यभागे उद्यताहरि मूर्त्तिमिः ॥ ६५८ ॥

हरिः श्रेष्ठतमो घोरः प्रासादवरमंडनम् ।
विना सिंहं तदा कर्म निरीहमधमं भवेत् ॥ ६५९ ॥

कविवाक्यप्रकाशेन रसगुणादयस्तथा ।
प्रकाशयन्ति वाक्येन वीरादिकरुणादयः ॥ ६६० ॥

वीरभावानुसारेण पुनरुग्राद् विशेषतः ।
नानाकारे तथा सिंहः सिंहारोही गणस्तथा ॥ ६६१ ॥

सिंहा विचित्ररूपेण भित्तौ जांघे चूलावधि ।
सर्वत्र सिंहाः शोभन्ते नृसिंहसिंहलक्षणाः ॥ ६६२ ॥

सिंहभेदा :—

सिंहाश्चतुर्विधाः श्रेष्ठा विराजा जाग्रतोद्यताः ।
गजक्रान्ता तथा मुख्ये हरिराजचतुष्टयम् ॥ ६६३ ॥

विराजा वक्रभावेन पश्चात् दृष्टिविधानतः ।
पृष्ठपादे सदारूढ़ो विराजहरिररुत्तमः ॥ ६६४ ॥

पृष्ठपादारूढसिंह आरोही विकटाकृतिः ।
वीरवेशा सुशोभाश्च च जाग्रता मत्तरूपिणः ॥ ६६५ ॥

पृष्ठपादद्वये पीठे आसीनो धरणीतले ।
लम्फप्रदानन्यायेन* उद्यतो धरणीं प्रति ॥ ६६६ ॥

* भावेन

गजराजस्थ सिंहस्य स्त्रिपादाः कुञ्जरोपरि ।
एकपादो वक्षसि च न्यासितः त्रासितो यथा ॥ ६६७ ॥

प्रासाद ऊर्ध्व देशे च राहे च ऊद्यता महत् ।
वाडभी भेदशीर्शे च मुख्यतः कार्यभेदतः ॥ ६६८ ॥

सम्मुखे मध्यदेशे च मकरिका हरि यथा ।
निम्ने मकरिकाकार ऊर्ध्वे हरिमुखं तथा ॥ ६६९ ॥

मकरिकामुखनिम्ने लतिका कुञ्चिता तथा ।
मकरिकाकृते सिंहसम्मुखभागे च स्थापयेत् ॥ ६७० ॥

नासा दीर्घतमा घोरा गौव्हरा मकराकृते ।
नासानिम्ने केश गुच्छं दर्दुरपुष्पगर्भवत् ॥ ६७१ ॥

कपाले तिलकं दिव्यं शुण्डाकारे मनोहरे ।
दन्त विकट जिव्हा च गौव्हरं निम्न खोदयेत् ॥ ६७२ ॥

एषाकृते पृष्ठदेशे हरिमस्तकस्थापनम् ।
विमानमालिनीमध्ये रम्यं रम्यतरं महत् ॥ ६७३ ॥

पार्श्वदेशे मध्यभागे उद्यता सिंहउत्तमः ।
उभयदिशि भागेन लम्फाकारे च उद्यतः ॥ ६७४ ॥

सहयंत्रम् :—

लम्ब क्षेत्रे चतुरश्रे दक्षिणे अहिराजवत् ।
रेखा दक्षिणमारभ्य वामकोणावधिः तथा ॥ ६७५ ॥
चतुरस्रे तथा दीर्घे पक्षभागे त्रयं तथा ।
दक्षिणदेशमारभ्य अहिमुखाकृतिं चरेत् ॥ ६७५ ॥

दक्षिणे रेखयुक्तेच पक्षरेखान्वये गुणे ।
कोणानि पक्षच्छेदे च* ऊर्ध्वभागे च मस्तकम् ॥ ६७६ ॥

* वामकोणे तथा जानु

पृष्ठदेशे तथा पुच्छं रम्यकेसरकुंचितम् ।
विकटैर्दशनैः युक्तं* पशुराजोद्यतं महत् ॥ ६७७ ॥

* घोरं

विमानमालिनी शीर्षे उभयो पार्श्वशोभना ।
मध्ये च कलशं दिव्यं यूपाकारेण कारयेत् ॥ ६७८ ॥

विषमा दैर्घ्ययुक्तेन शिला प्रस्थे त्रयोगुणे ।
सर्वोर्ध्वबिन्दुमारभ्य प्रथमच्छेद योगतः ॥ ६७९ ॥

योजयेत् कुटिलां रेखां वक्षांशसम्मुखे तथा ।
ऊर्ध्वे मुंडं तथा निम्ने पादगर्भादिमंडले ॥ ६८० ॥

केसरकुञ्चिताकारे तन्निम्नच्छेदलम्बने ।
उत्थानपादयुक्तश्च शीर्षमुख्यांशसुन्दरः ॥ ६८१ ॥

पृष्ठे यो विषमो भागस्तदंशे कुटिलाकृतौ ।
खोदयेच्च प्रयत्नेन सपुच्छाकृति लांगुलम् ॥ ६८२ ॥

नखकेसरसंयुक्तं दंतगुच्छादिशोभनम् ।
केसरी विकटो घोरः कलशोभयवर्त्तिनी ॥ ६८३ ॥

कलशभेदा :—

कलशो द्विविधः प्रोक्तः कुम्भयूपाविशेषतः ।
यूपा कारान्वितः कुंभ श्रेष्ठः शक्तिगृहे तथा ॥ ६८४ ॥
यूपः सर्वस्थले श्रेष्ठः कुंभः शक्तिगृहे तथा ॥ ६८४ ॥

शिवगृहे तथा विष्णुनिलये कलशो महान् ।
कुम्भाकारः तत्र चोर्ध्वे पिण्डिका चातिशोभना ॥ ६८५ ॥

शृणु भेदान् कृते यूपं केनाकारेण कारयेत् ।
कैश्च भेदैश्च संयुक्तं कुम्भं कलशमेव च ॥ ६८६ ॥

केवलं दीर्घभागेन लिंगाकारं च पिच्छिलम् ।
ऊर्ध्वदेशे तथा दिव्ये मणिदेशे सुशोभितम् ॥ ६८७ ॥

एतवद्धि महत्पुण्यं सर्वकामफलप्रदम् ।
सर्वलक्षणयुक्तं हि यूपकुम्भं च स्थापयेत् ॥ ६८८ ॥

रुद्राध्याये तथा पूजा उपचारादयस्तथा ।
विड़वंग् न्यास मात्रेण मुख्यशिल्पी तथा द्विजः ॥ ६८९ ॥

वहनात् मूलअग्रञ्च त्रिधा प्रदक्षिणान्तरम् ।
नानावाद्यैस्तथा गीतैः उत्सवे कुम्भ* स्थापनम् ॥ ६९० ॥

* यूप

कारयेच्च प्रयत्नेन यथा शास्त्रषु कल्पयम् ।
यूपकुम्भं प्रयत्नेन गर्भका गर्त्तस्थापनम् ॥ ६९१ ॥

गोमुखाकृतिचूडे च स्थापयेत् शिल्पिपुंगवचः ।
मंडपाकृतिचूड़ायां कुम्भकलश स्थापयेत् ॥ ६९२ ॥

कुम्भकलश त्रिभागे च छेदादिनिर्णयं शृणु ।
कलशयुगभागेन पादकुम्भवलिं तथा ॥ ६९३ ॥

भाण्डदेशे तथा शीर्षे* सराबकृतमस्तकम् ।

* मध्ये

वीथिपीठसमं पाद कर्णिका कुम्भिकाकृतिः ॥ ६९४ ॥

कुम्भदेशान्तरे रम्ये वलिमुन्ड़ालिकाकृतौ ।
ऊर्ध्वदेशे यथा भाण्डं सरावं निम्नमुखिका ॥ ६९५ ॥

एताद्युक्तेषुभागेषु कलशादि विनिर्मितम् ।
मंडपाकृति तद् भेदे यथा तन्त्रसमर्थितम् ॥ ६९६ ॥

अन्यगर्भक प्राकार :—

शृणु त्वं सम्प्रवक्ष्यामि भिन्नभेदांस्तथा गुणान् ।
गर्भकश्चान्यभेदो हि यदुक्तं सौधिकागमे ॥ ६९७ ॥

अक्षुण्णकर्मयुक्तायां यावत् कंठदेशावधि ।
तदोच्ये भेदयुक्तेन केन रूपेण क्रियताम्* ॥ ६९८ ॥
तदूर्ध्वे त्रय भेदेन चूडादेशं समाचरेत् ।

न्यूनाकारे तथा किञ्चित् ऊर्ध्वखर्परसंयुतम् ।
समभागे द्वयोर्देशे चूलिका गगनं प्रति ॥ ६९९ ॥

ऊर्ध्वक्षेत्रे तथा पक्षभागेण समभागतः ।
भाजयेत् तत्र निम्ने च पट्टिकुम्भाकृतिः सदा ॥ ७०० ॥

पट्ट्यान्ते चूलिका दिव्य* पद्मपत्रादिशोभिता ।
लम्बभागे त्रिभागेण चालस्योर्ध्वे विशेषतः ॥ ७०१ ॥

* पीढैकं चूलिका ऊर्ध्वे

आद्ये चालं परे* सिंह चतुरं चतुरावधि ।
सिंहपृष्ठे पक्ष* भागे अपरं चालमुद्रकम् ॥ ७०२ ॥

* पीढचाल

* वेद

चालान्ते पीठिका क्षीणे चतुरस्राकृते तथा ।
पीठिकान्ते शुभः कुम्भकलशः तत्र शोभते ॥ ७०३ ॥

चतुःपार्श्वे* हरिश्रेष्ठः करिराजोपरिस्थितः ।
पीठन्याय तथा चाल कलशादि विमण्डयेत् ॥ ७०४ ॥

* द्वयोः पार्श्वे

एतानि क्रमसंयुक्ते पीढ़ं चालाकृतौ महत् ।
वाड़भीजातियः श्रेष्ठा विमानमालिनी गृहम् ॥ ७०५ ॥

कीर्त्तिप्रशंसा––

तंत्र पीठे यंत्रगर्भा प्रासाद सुमनो महत् ।
कल्पान्तयुग पर्यन्तं ध्रुवम् कीर्त्तिः स्थिरा भवेत् ॥ ७०६ ॥

अम्बायागसहस्त्रे अश्वमेधेधिके कृते ।
यत् पुण्यं त्रिगुणं तत्स्यात् गृहादिशक्तिस्थापने ॥ ७०७ ॥

जन्म जन्मान्तरात् पापात् तत्क्षणं प्रतिमुच्यते ।
प्रासाददृढ़रूपेण यद्यपि सौधिकामते ॥ ७०८ ॥

जन्मजन्मान्तरं पापं तत्क्षणात् प्रतिमुच्यते* ।
जननी जन्मना तस्य पवित्र जायते ध्रुवम् ॥ ७०९ ॥
प्रसाद यदि कुर्वन्ति शीला योगेमनोहरे ।

कोटिजन्मसहस्राणां कल्मषं प्रविलीयते ।
अक्षयकीर्त्तिदं पुण्यं सर्वसिद्धिकरं परम् ॥ ७१० ॥

पुण्योत्तमं सदा श्रेष्ठं प्रासादस्थापनं महत् ।
प्रासादशेषकालेन पूजादिविधिपूर्वकम् ॥ ७११ ॥

कुर्यात् पूजागर्भदेशे लक्ष्मीबन्धादि पूजयेत् ।
करणीयं यथा पूर्वे तोरणं नाटमन्दिरे ॥ ७१२ ॥

तोरणकर्मणि––

भैरवी व्याघ्रमुखायाद्या* निम्नगृहे स्थलोत्तमे ।
पंचधा भाजयेत् बन्धं नागपद्मादिशोभितम् ॥ ७१३ ॥

* व्याघ्रसिंहास्यां

गेलवनारीबन्धश्च जलपत्रादिबन्धना ।
युक्तो हि द्वारदेशश्च गजलक्ष्मीविमण्डितः ॥ ७१४ ॥

नन्दावर्त्ता त्रिवर्ते च निम्नदेशे दृढ़े तथा ।
एतद् क्रमे कृतो बन्धः सुगर्भः* सुमनोहरः ॥ ७१५ ॥

विभिन्नरूपयुक्तेन च प्रासाद मण्डयेत् सुधीः ।
लताबन्धः तथा मूर्त्तेध्यानादिकसमर्थनम् ॥ ७१६ ॥

निशाभागे सम्मुखे च भित्त्यंगे गर्भके तथा ।
गर्भे च मूर्त्तिभेदञ्च लतादिपुष्करादयः ॥ ७१७ ॥

प्रतिमाप्रमाणम् :––

अथ सम्यक्प्रकारेण गर्भमूर्त्तेश्च निर्णयः ।
शृणु त्वं गृहतुल्याता प्रतिमा उच्चता तथा ॥ ७१८ ॥

एकहस्तो यदा गर्भो मूर्त्तिःरुद्राङ्गुली तदा ।
दिगंगुलप्रमाणेन वृद्धिः यावत्* चतुष्टयम् ॥ ७१९ ॥

* गर्भे

पक्षांगुलं दिगहस्ते शतार्द्धान्तांगुलस्य च ।
एतया क्रमवृद्धध्या तु जायते मूर्तिनिर्मितिः ॥ ७२० ॥

वाह्येन सप्तधा भाज्या वर्जयेदन्तभागकैः ।
ऋतुभागे कृता मूर्त्तिः निशामूर्त्तिश्च जायते ॥ ७२१ ॥

यदुक्तं शिल्पशास्त्रेण प्रतिमाध्याय वर्णितम् ।
तथा न्याये सदा रम्ये स्थापयेत् प्रतिमावलिम् ॥ ७२२ ॥

नानाकारे छेदयुक्ते यत् शास्त्रैस्तु समर्थितम् ।
पशुपक्षिलताछेदे वल्लिभिकुम्भिकावलिः ॥ ७२३ ॥

वलिः झरादयः कुंभ फेणी च खर्करा*दयः ।
* खर्परा
वज्रमस्तकदिव्यं च तत्तुल्यं कुञ्चितास्थलम्* ॥ ७२४ ॥
* वत्तुला सह

गुणभित्यादियुक्तं च कारयेत् सुप्रयत्नतः ।
बन्धे रम्ये मनोज्ञे च वानरबन्ध उत्तमः ॥ ७२५ ॥

सिंहबन्ध स्तथापीढ़े कुञ्जरबन्धउत्तमः ।
मृगयूथादियुक्तश्च रामगायत्रीं खोदयेत् ॥ ७२६ ॥

पुष्पकलिकासंयुक्तः रमणीयाकृतौ तथा ।
सर्वांगसुन्दरा भित्तिबन्धना पुष्पिकावलिः ॥ ७२७ ॥

शिखरमालिनी श्रेष्ठा शिल्पिनांनन्ददायका ।
सर्वलक्षणयुक्तं च प्रासादगठनं महत् ॥ ७२८ ॥

विश्वकर्मांगकर्मेण जायते मोक्षनिश्चयः ।
इह लोके सदा शान्तिर्धनधान्यसुतास्तथा ॥ ७२९ ॥

न हि जन्मानतरं तस्य शिल्पसिद्धिर्भवेत्तथा ।
शिल्पविद्या सदा श्रेष्ठा सर्वदानन्ददायिका ॥ ७३० ॥

जायतेक्षयं पुण्यं च गठनकर्मकौशले ।
शतराज्यादि भूषा च शतग्रामाकुले तथा ॥ ७३१ ॥

शतंभारसुवर्णेन मण्डितो नृपसत्तमः ।
शतहेमांगिनी नारी शतबाहुबलान्वितः ॥ ७३२ ॥

सर्वे विफल यान्ति हि विना कीर्ति सदा ध्रुवम् ।
कालक्षयवशात् सर्व धनं धान्यं सुतानिच* ॥ ७३३ ॥
* सुखानि

क्षयमाप्नोति कालेन कीर्त्ति रेव हि शाश्वती ।
यत्फलं राजसूयेन सोमयागेन यत् फलम् ॥ ७३४ ॥

तत् फलं परिपूर्णं स्यात् शक्तेर्भवननिर्मितौ ।
शास्त्रानुसारिणी कीर्त्तिः सर्वसिद्धिप्रदायिनी ॥ ७३५ ॥

गृहानुसारतः छेदभेदकर्मादिकं तथा ।
एतैः क्रमैस्तु युक्तः स्यात् प्रासादः सौधिकागमे ॥ ७३६ ॥

यन्नृपकीर्त्तिरूपेण क्रियते शुद्धमानसात् ।
शुभलग्नादियुक्तेश्च यो नृपः शक्तिमन्दिरम् ॥ ७३७ ॥

करोति पूर्णं निर्विघ्ने शिवलोकं स गच्छति ।
पीठं शृणु त्वं तत् गर्भे यद गर्भे* परमेश्वरी ॥ ७३८ ॥

* राजते

पीठ लक्षणाम्––

स्थापनार्थं तथा मूर्त्तेरासनादिकलक्षणम् ।
यथाकारः तथा गर्भः मणिपीठ समन्वये ॥ ७३९ ॥

* तथाकृतिः

गर्भप्रस्थानुभावेन पार्श्वार्धे समभावतः ।
रेखां कृत्वा द्विभागेन वेद लम्बाकृतो तथा ॥ ७४० ॥

द्वारदेशस्य मध्येन मध्यबिन्दुं च कल्पयेत् ।
कल्पितबिन्दुमारभ्य त्रिभुजं आसनं प्रति ॥ ७४१ ॥

मध्यभागस्य यत् बाहु कर्त्तनाकृत्ते मध्यमम् ।
तद्बाहुसमरूपेण त्रिभुजस्य भुजत्रयः ॥ ७४२ ॥
मध्यभागस्य यद्बाहुः मध्ये केंन्द्रं विजानत ।
निम्नबाहुः समायुक्ते त्रिभुजं सममाचरेत् ॥ ७४२ ॥

त्रिभुजोर्ध्वगतं क्षेत्रं चतुरस्रसमं तथा ।
तत्क्षेत्रं वेदभावेन भाजयेत् समभावतः ॥ ७४३ ॥

ऊर्ध्वभागं* परित्यज्य द्विभागे आसनोत्तमम् ।
तदनुरूप भूमौ च रत्नगर्भासु स्थापयेत् ॥ ७४४ ॥

* पृष्ठ भागं

इष्टमूर्त्यनुसारेण यंत्रादिस्थापनं महत् ।
यंत्रानुसारीतः गर्भे सर्वबिन्दुसमन्वितः ॥ ७४५ ॥

तद्गर्भं पूरयेच्चेव नाना रत्नादिभि स्तथा ।
पूजयेत् रत्नशिलानी शिलान्यासे द्विजोत्तमम् ॥ ७४६ ॥

हीरकं पारदं तीक्ष्णं मनःशीलञ्च गन्धकम् ।
वैदूर्य मौक्तिकं दिव्यं प्रवालं हिंगुलं तथा ॥ ७४७ ॥

गोमेदादिसमायुक्तं हरितालसमन्वितम् ।
पीठन्यासार्थमंत्रेण पूरयेत् गर्भमुत्तमम् ॥ ७४८ ॥

तदन्ते दिव्यशिलायां आसनं गठनक्रिया ।
आचरेत् निपुणं शिल्पी दैवानुग्रहकांक्षया ॥ ७४९ ॥

आसनभेदाः——

आसनं विविधं प्रोक्तं कणिपद्मपीठाकृतिः ।
इष्टानुकूलभावेन कारयेत् भागमुत्तमम् ॥ ७५० ॥

आसनार्थं यदा भूमिस्तत् प्रस्थस्यार्धभागतः ।
तदुच्चमासनं दिव्यं वेधभागः स उच्यते ॥ ७५१ ॥

कणिपीठः——

यद्वेधमासनं तत्र युगभागेन भाजितम् ।
आद्यभागे तथा पट्टि ऊर्ध्वे तदनुसारतः ॥ ७५२ ॥

युगभागे तथा लम्बा कारयेद् वाणधा गृहम् ।
तदनुसारतः छेदलम्बाकारे मनोहरे ॥ ७५३ ॥

केवलं मध्यभागश्च तिर्यग् रेखान्वितः तथा ।
मध्ये क्षीणाकृतिपट्टी मेखला नाम कथ्यते ॥ ७५४ ॥
मध्य द्विभाग संयुक्तं डमरुभागमाचरेत् ।

तिर्यक् क्षेत्रगते भाग आसनं गर्भनामितम् ।
एवं कृत्ते कणिपीठं रेखपीठं मतान्तरे ॥ ७५५ ॥

पद्मपीठम्——

शृणु त्वमपरान् भेदान् पद्मपीठासनं महत् ।
तदुच्चयवेधयुक्तञ्च वेदधा प्रस्थभागतः ॥ ७५६ ॥

लम्बाकारे तथा लम्बा बाणभागेन पूर्ववत् ।
मध्यभागं द्विभागेन विराजबन्धः कथ्यते ॥ ७५७ ॥
प्रतिरेखा द्विभागांशे विराजबंध खोदयेत् ॥ ७५७ ॥

अर्धनिम्नांशयुक्तञ्च पक्षधा समभावतः ।
निम्ने पट्टी तथा क्षीणे पट्टी पद्मे परांशके ॥ ७५८ ॥

ऊर्ध्वे चैतत्क्रमन्याये पद्मपीठं मनोहरम् ।
मध्यद्विभागमध्येन हरिश्रेष्ठादि स्थापयेत् ॥ ७५९ ॥

लम्बाकारे कोणस्थाने विराजं सिंह* मुत्तमम् ।
कारयेत् सुप्रयत्नेन दिव्यपीठं तदुच्यते ॥ ७६० ॥

* युगलो

ऊर्ध्वभूमौपरि पक्षभागेन प्रस्थभाजितः ।
निम्नपिण्डिका तदूर्ध्वे ऊर्ध्वपीण्डी च वर्तते ॥ ७६१ ॥

शिलागर्भान्तरे* एत दासनं महदाचरेत् ।
आसनान्ते तथा न्यास्या इष्टमूर्त्ति स्तथा शुभे ॥ ७६२ ॥

* शय्यांतरे एवं

विग्रहभेदा :—

श्रृणु त्वं प्रतिमाभेदान् वेदधा मुख्यभागतः ।
उत्तमा मध्यमा चपि कनिष्ठा मूर्त्तिभेदतः ॥ ७६३ ॥

उत्तम :—

गर्भद्वारं यदुच्चं स्यात् वसुभागेन भाजितम् ।
त्यक्तभागः सदा* निम्ने समुद्रवेदधा कृतः ॥ ७६४ ॥

* उर्ध्वभागं परित्यज्य

वेद गुणान्तरे वर्ज्यं* द्विगुणं यत् फलं गुणाः ।
तस्यानुसारतो मूर्तिः कृता जायेत चोत्तमा ॥ ७६५ ॥
त्रिभागांशे तथा ऊर्ध्वे वर्जयेत् पञ्च अंशकम् ।
तदनुसारतः मूर्त्तिः सदा जायेत चोत्तम् ॥ ७६५ ॥

मध्यम :—

ग्रहांशे भाजयेत् द्वारमेक* भागं परित्यजेत् ।
वसुभागे यथापूर्वं त्रिभागः पक्ष* वर्जयेत् ॥ ७६६ ॥

* द्वारं ऊर्ध्वे * पुनः

अधम :—

एकभागेन या मूर्त्तिः मध्यमाकृतिविग्रहा ।
एकदशांशयुक्ता च भागादिकरणं यथा ॥ ७६७ ॥
परित्यक्तयुगांशं च वंचिते मध्यमा तनुः ।
केवलं निम्नभागा तु सा मूर्त्तिरधमा स्मृता ॥ ७६७ ॥

दीर्घा तु प्रतिमा वर्ज्या प्रासादे मंडपादिके ।
गर्भगृहे कृतं स्थानं तत् स्थाने मध्ये पिण्डिका ॥ ७६८ ॥

ततक्षुद्रप्रतिमा वर्ज्या प्रासादमंडपे तथा ।
गर्भगृहस्थले मध्ये अथवा पिण्डिकोपरि ॥ ७६८ ॥

पिण्डिकोपरि भागे च मुख्यविग्रहस्थापनम् ।
मुख्यतो देवगृहेण कनिष्ठादित्यमंगुलम् ॥ ७६९ ॥

पंच हस्तावधिं मूर्तिं कुर्यात् सुविग्रहः स्मृतः ।
देवगृहानुसारेण कनिष्ठादित्य अंगुलम् ॥ ७६९ ॥

वसुहस्ता इति श्रेष्ठा नाति पाषाणे कश्चन* ।
प्रतिमा सर्वदा स्निग्धा नानालंकारमण्डिता ॥ ७७० ॥

वसु हस्तावधिः मूर्तिः कर्त्तव्या शैलयोगतः ।

भोगदृष्टिस्तथा सौम्या पिच्छिलं चांगवैभवम् ।
हास्या वा विकटा तत्र यथा ध्यानानुसारतः ॥ ७७१ ॥

विकल्पमुखयुक्तायां विषमं जायते फलम् ।
आयुधं किरीटं भाले तिलकं च तथाविधि ॥ ७७२ ॥

योगनेत्रादिसंयुक्तां शक्तिमूर्त्तिं तथाचरेत् ।
पल्ली सुदृश्यतद्भंगी शंखनिध्यादि शोभना ॥ ७७३ ॥

सर्वांगसुन्दरमूर्त्तिः गठने मुक्तिनिश्चयः ।
छेदयुक्तादि वज्रादि विकलीकृतविग्रहः ॥ ७७४ ॥

ध्यानहीनं न कुर्वाणः शिल्पी तु नरकं व्रजेत् ।
शृणु प्रसंगभेदेन तालमानादिनिर्णयम् ॥ ७७५ ॥

शिष्यबोधाय वक्ष्यामि शक्तिमूर्त्तिषु केवलम् ।
वसुताले च मुख्येन देवीविग्रहमाचरेत् ॥ ७७६ ॥

दुर्गा कात्यायनी काली पार्वती च सरस्वती ।
महाकाली तथा रौद्री वाराही मुण्डमालिनी ॥ ७७७ ॥

सर्वास्ता वसुतालेन मातरश्च तथैव च ।
वसुताले यथा न्याये मात्रादिः अंगुलिक्रमे ॥ ७७८ ॥

शृणु त्वं देहभेदेन वसु मात्रान्वयी वपुः ।
पादादिकेशपर्यन्तं मात्रादि वेदधा तथा ॥ ७७९ ॥

बाणांगुलप्रमाणेन शक्तिपादमनोहरे ।
वेदाभागः तथा दंडो* जायते चैकविंशतिः ॥ ७८० ॥

* पादः दण्डं

गुल्फादिमिश्रिते* जानुगुणांगुलेन खोदयेत् ।
कटिदेशश्च सुदृढः एकविंशतिरंगुलीः ॥ ७८१ ॥

* सहिते

मध्ये ग्रहांगुले गर्भमेढ्रदेश समन्वये ।
उदरादित्ययुक्तं च हृदयं ग्रहसंख्यकम् ॥ ७८२ ॥

ग्रीवा चार्धत्रयेयुक्ते शिरः भास्कर संख्यकाः ।
अस्मिन् क्रमे अष्टताले देवीविग्रहमाचरेत् ॥ ७८३ ॥

शिल्पांत कर्माणि--

मूर्त्तिस्थापनकार्यान्ते शिल्पी श्रेष्ठः स भक्तितः ।
तडागजलयुक्ते न सुधीः स्नानादिकं चरेत् ॥ ७८४ ॥

मरीचकर्पूरदुग्ध गुडयुक्ते प्रपानके ।
भांडमानीय शिरसि गर्भगृहान्तरे तथा ॥ ७८५ ॥

मध्यस्थाने तथा भांडं भाजयेत् क्षिप्तभावतः ।
तज्जले प्रतिमां दिव्यां प्रोंच्छयेच्च सुनिर्मले ॥ ७८६ ॥

हविष्यादिसमायुक्ते तत्त्वपूजाविधानतः ।
तदन्ते विधिपूर्वेण प्रासादभवनं तथा ॥ ७८७ ॥

शल्पशास्त्रस्त्रोत्रम्--

शिल्पशास्त्रं महत् पुण्यं विश्वकर्मानुशासनम् ।
ग्रन्थो न शक्यते वक्तुं शुक्रादेः जैमिनेः तथा ॥ ७८८ ॥

केवलं ज्ञानमात्रेण वाड़भी खर्पराकृतिः ।
विमानमालिनीभेदं वदिष्यामि न संशयः ॥ ७८९ ॥

विमानमालिनीभेदो मापादिशास्त्रसम्मतः ।
क्षीणज्ञानानुसारेण प्रासादभागकेवलम् ॥ ७९० ॥

भागभित्तिस्तथा वेध बन्धनादि यथाक्रमे ।
गर्भकं भागभेदञ्च अन्यप्रासादलक्षणम् ॥ ७९१ ॥

शक्तिभवनंमुख्येन यंत्रादिसहितं पुनः ।
गोपनीयं सदा यंत्रभेदमात्रादि* सर्वदा ॥ ७९२ ॥

* मंत्रादि

केवलं शिष्यबोधार्थं प्रवक्ष्याम्यत्र चाधुना ।
विना भेदादिज्ञानेन कीर्त्तिः विलक्षण भवेत् ॥ ७९३ ॥

तिमिराच्छन्नराकायां चक्षुर्हीनगतिः यथा ।
विना शास्त्रानुसारेण वृथा भागादिनिर्णयः ॥ ७९४ ॥

प्रासादो वाड़भी श्रेष्ठा मुखशाला विमानिका ।
द्वयोर्भेदे द्वयोर्भागः प्रकाशो नाम उच्यते ॥ ७९५ ॥

शिल्पप्रकाशग्रन्थोऽयं शिष्यबोधाय केवलम् ।
न ज्ञानभेदज्ञानञ्च संक्षेपात् किञ्चिदुच्यते* ॥ ७९६ ॥

* यदि संक्षेप भागादि न चान्यस्य प्रयोजनम् ॥ ७९६ ॥

सौधिकागमयुक्तं च प्रासादलक्षणादयः ।
विमानमालिनी श्रेष्ठा शक्तेर्भवनविस्तरः ॥ ७९७ ॥

ग्रन्थकारपरिचयः—

तौ शक्तिचरणौ वन्दे नमो भट्टारिका स्वयम् ।
ऐरतो मण्डलाधीशो राजा भट्टारकस्तथा ॥ ७९८ ॥

वीरवर्मा महातेजा रक्षणार्थं पुनः पुनः ।
पुनश्च चरणौ वन्दे पुरुषोत्तमरक्षितौ ॥ ७९९ ॥

सद्‌गुरुः माधवो भट्टो नानाशिल्पविशारदः ।
तदनुज्ञाप्रभावेण शिष्यबोधार्थ* केवलम् ॥ ८०० ॥

* हिताय

नानाशास्त्रमतं श्रेष्ठं देशाचारे विभिन्नता ।
देशभेदे तथा न्याये नानाकारे च शिखराः ॥ ८०१ ॥

लौकिककर्ममार्गेण पृथग् रीत्या च जायते ।
तदनुसारतः शास्त्रं कौलाचार* मताश्रये ॥ ८०२ ॥

* लोकचारः मताश्रये

यद्यपि किञ्चिज्ज्ञानं प्रत्यक्षज्ञानसम्बलम् ।
गुरुप्रदत्तं यद् ज्ञानं तद्ज्ञानानुश्रुतं* तथा ॥ ८०३ ॥
* पठने

नानाशास्त्रानुरूपेण कृत्वा ग्रन्थागमोक्तयः ।
प्रकाशये च शिष्यार्थऽअंश, भेदानुसारतः ॥ ८०४ ॥

सर्वशास्त्रोत्तमं शिल्पं विश्वकर्मानुशासनम् ।
मुक्तिदं कीर्त्ति श्रेष्ठं च सर्वसिद्धिप्रदायकम् ॥ ८०५ ॥

सर्वभागसमायुक्तं सर्वांशकर्मनिर्णयः ।
वक्ष्यामि शिल्पशास्त्रं तु शिल्पप्रकाशसंज्ञकम् ॥ ८०६ ॥

लेखनकारपरिचयः——

विप्राग्रकुलसम्भूतः मञ्जूषाकटकोत्तमे ।
महेन्द्रवेष्टितो ग्रामः पूर्णं भूसुरसंकुलः ॥ ८०७ ॥

श्रीनिवासपुरे ख्यातः कौशिककुलसम्भवः ।
गोविन्ददाशनाम्नाहं सर्वनीतिविशारदः ॥ ८०८ ॥

प्रणमामि महाशक्तिं दुर्गाचरणपंकजे ।
लिखितं पुस्तकं सारश्रीनिवासनृपार्थतः ॥ ८०९ ॥

शकेवाण तथा इन्दु सिन्धु नक्षत्र नायके ।
लिखितोऽयं मया ग्रन्थो यथा शास्त्रान्तरे तथा ॥ ८१० ॥

इति श्री कौलाचारपरायणभट्टारक रामचन्द्रमहापात्र
उद्गाता
शिल्पिप्रवरेण विरचिते शिल्पप्रकाशे द्वितीयप्रकाशः ।
॥ समाप्तश्चायं ग्रन्थः ॥

चित्र १ – देवालयांसाठी जागांचे आकारांनुसार प्रकार १.३९–४६

(अ) देवालयांच्या जागांचे निरनिराळे आकार

(आ) निरनिराळ्या आकारांमध्ये देवालयांचे आराखडे

(इ) निरनिराळ्या आकारांमध्ये देवालयांचे आराखडे

चित्र २

(अ) शंकू, १.४७–५५

(इ) योगिनी यंत्र, १.९०–१००

(आ) देवालय व मुखशाला यांचे अधोच्छंद, १.६९–८९

## चित्र ३ — दरवाजाचे विभाग

(ई) भैरवयंत्र, १.१५९

(अ) दरवाजाचे संकल्पचित्र, १.११३

(उ) तोरण भैरव

(आ) दरवाजाची चौकट, मुक्तेश्वराचे देवालय

(इ) कोटितीर्थेश्वराचे देवालय

(ऊ) व्याघ्रसिंहानंनी

चित्र ४ — वज्रमस्तकांचे प्रकार

(अ) किरीट, १.१२१

(आ) वृत्त, १.१३३

(इ) लता, १.१४६

(ई) किरीट, ब्रह्मेश्वराचे देवालय

चित्र ५ – वज्रमस्तकांच्या प्रकारांचे नमुने

(आ) वृत्त व लता प्रकारचे वज्रमस्तक, चौरासी येथील बारा देवालये

(अ) दरवाजाच्या चौकटीवर किरीट, कोटितीर्थेश्वराचे देवालय

(इ) पीठावरील लता, तीर्थेश्वराचे देवालय

(ई) पीठावरील लता, राजराणी देवालय

चित्र ६ – तोरणलक्ष्मी, १.१७२

(अ) तोरणलक्ष्मी यंत्र, १.१७२

(आ) तीर्थेश्वराचे देवालय

(इ) कोटितीर्थेश्वराचे देवालय

(ई) भास्करेश्वराचे देवालय

चित्र ७ – दरवाजाच्या चौकटीवरील निरनिराळ्या नक्षी, १.१९४–२०२

(अ) नक्षींचे प्रकार, संकल्पचित्र

(आ) कोणार्क येथील देवालय

(ई) स्वर्णजलेश्वराचे देवालय

(इ) चित्रकरिणी देवालय

## चित्र ८ – मुखशालेची पुढची भिंत

(अ) संकल्पचित्र. १.२०३

(आ) वाराहीचे देवालय, चौरासी

(इ) पीठाचे निरनिराळे प्रकार, १.२०९–२१८

चित्र ९ – वाराहीचे देवालय, चौरासी

(अ) मुखशालेची पुढची भिंत

(आ) नागस्तंभासह, १.२२४,२२९, अलसा-छाया, १.२०६

## चित्र १० — मुखशालेची भिंत

(आ) महाविद्या, गंगेश्वरीचे देवालय, १.२५६

(अ) वाराहीचे देवालय, चौरासी
पंचकर्म, १.२३७
कोणक, १.२३४
अनर्थ, १.२४८

(इ) महाविद्या, वाराहीचे देवालय

(ई) शक्तियंत्र, १.२६०

(अ) ब्रह्मेश्वराचे देवालय, भुवनेश्वर

चित्र ११ – पंचकर्म, निरनिराळे प्रकार

(इ) बैताल देवालय, भुवनेश्वर

(आ) गंगेश्वरीचे देवालय, ब्यालिसबती

चित्र १२

(अ) पंचकर्म, राजराणी देवालय

(आ) कणिपीठ, राजराणी देवालय, भुवनेश्वर

## चित्र १३ – दिक्पाल, १.२५७

(अ) अग्नी, ब्रह्मेश्वराचे देवालय

(आ) वायू, सारी देऊळ

(इ) इन्द्र, सारी देऊळ

(ई) यम, राजराणी देवालय

चित्र १४ – निरनिराळ्या नक्षींची संकल्पचित्रे, १.२८४–३१६

चित्र १५

निरनिराळ्या नक्षींचे नमुने

(अ) गुम्फना, जलपात्र, रंगणी, कुटिला मुक्तेश्वर

(आ) रतिकेरा, शिशिरेश्वर

(इ) न वर्णिलेली नक्षी, चित्रकरिणी देवालय

(ई) वर्तुला आगमा सारी देऊळ

## चित्र १६ — भारराक्षस, १.३४३

संकल्पचित्रे : युगल एक

## फुलकारी, १.३१७

(अ) संकल्पचित्रे

(आ) कोरीव नक्षी, शिशिरेश्वराचे देवालय

(ई) कोरीव नक्षी : युगल, वाराहीचे देवालय

मुक्तेश्वराचे देवालय

चित्र १८ – कौतूहल

(अ) नरविराल, कोणार्क येथील देवालय

(आ) गजविराल, कोणार्क येथील देवालय

(इ) सिंह मकरिकाकृती, भास्करेश्वराचे देवालय

**चित्र १९**

**खिडक्या, १.३६५**

(अ) ब्रह्मेश्वराचे देवालय

(आ) चित्रकरिणी देवालय

(इ) वाराहीचे देवालय

**चित्र २०**
**शिक्षादान मूर्ती,**
**१.३७६–३८८**

(अ) ब्रह्मेश्वराचे देवालय (उत्तर बाजू)

(आ) ब्रह्मेश्वराचे देवालय (दक्षिण बाजू)

(इ) हनुमानाचे देवालय, पुरी

(अ) अलसा यन्त्र, १.४०२ (आ) अलसा, १.४०७ (इ) तोरणा, १.४१०

**चित्र २१ – अलसाकन्या, १.३९१–४०१**

(ई) मुग्धा, १.४१२

(उ) मानिनी, १.४१४

चित्र २२ – अलसाकन्या

(अ) डालमालिका, १.४१८

(आ) पद्मगन्धा, १.४२३

(इ) दपर्णा, १.४२८

(ई) विन्यासा, १.४३४

(उ) केतकीभरणा, १.४३९

(ऊ) मातृमूर्ती, १.४४५

चित्र २३ – अलसाकन्या

(अ) चमरा, १.४५०

(आ) गुण्ठना, १.४५५

(इ) नर्तकी, १.४६१

(ई) शुकसारीका, १.४६५

(उ) नूपुरपादिका, १.४६९

चित्र २४ – कोरलेली अलसाकन्या

अलसा, १.४०७, कोणार्क येथील देवालय

चित्र २५ – कोरलेल्या अलसाकन्या

(अ) केतकी भरणा, १.४३९, वैताल देऊळ

(आ) मातृमूर्ती, १.४४५, कोणार्क येथील देवालय

(इ) चमरा, १.४५०, सारी देऊळ

(अ) दर्पणा, १.४२८, मुक्तेश्वर

(आ) दर्पणा, १.४२८, ब्रह्मेश्वर

(इ) पद्मगन्धा, १.४२३, मुक्तेश्वर

**चित्र २६ – कोरलेल्या अलसाकन्या**

(ई) गुष्ठना, १.४५५, राजराणी देवालय

(उ) डालमालिका, १.४१८, सारी देवालय

(ऊ) मर्दला, १.४७३, नटमंदिर, कोणार्क

चित्र २७ – कोरलेल्या अलसाकन्या

(अ) दर्पणा, १.४२८, राजराणी देवालय

(आ) नूपुरपदिका, १.४६९, कोणार्क येथील देवालय

(इ) डालमालिका, १.४१८, वैताल देऊळ

## चित्र २९ – छप्पराचे बांधकाम, १.४९९

(अ) आद्यवर्तिका–संकल्पचित्र, १.४८२

(ई) छप्पर (लहरा भाग)

(आ) आद्यवर्तिका व राजबन्ध, वाराहीचे देवालय, चौराशी

(इ) मुखशालेच्या भिंतीचा आतला पृष्ठभाग

## चित्र ३० — छप्पराचे बांधकाम

(अ) राजबन्ध, संकल्पचित्र

(इ) चौरासी येथील वाराहीच्या देवालयाच्या पहिल्या छप्परावरील राजबन्ध व तोरणमालिका

(आ) राजबन्धाचे कोरीव कामं, शिशिरेश्वराचे देवालय

## चित्र ३१ – छप्पराचे बांधकाम

(अ) चौरासी येथील वाराहीच्या देवालयाचे दुसरे छप्पर

(आ) कुंभांचे प्रकार

(ई) मिथुन-कुंभ

(इ) कुंभांचे प्रकार

(उ) चापशिलेचे संकल्पचित्र छप्पराच्या काठावरील नक्षी

## चित्र ३२ – मंजुश्री प्रकारचे देवालय

(अ) मंजुश्री–संकल्पचित्र २.९

(आ) मंजुश्री प्रकारचे राजराणी देवालय

(इ) समसर्वतोभद्र पीठ
मंजुश्री देवालयाचा अधोच्छंद–शिल्पसारणीच्या मताने

(ई) समभद्र पीठ
रत्नसार देवालयाचा अधोच्छंद–शिल्पसारणीच्या मताने

चित्र ३३ – देवालयांचे निरनिराळे प्रकार

(अ) मृदंग, २.१७

(आ) मृदंग

(इ) कुटाईतुण्डी देवालय, खिचिंग

(ई) रत्नसार (१), २.१३

(उ)

(ऊ)

(ए)

न वर्णिलेली संकल्पचित्रे

## चित्र ३४ – महामेरू प्रासाद

(आ) अनन्त वासुदेवाचे देवालय, भुवनेश्वर

(अ) महामेरू प्रासाद, संकल्पचित्र, २.२३

(इ) समक्षेत्र पद्मपीठ
महामेरू प्रासादाचा अधोच्छंद–शिल्पसारणीनुसार

## चित्र ३५ — कैलास प्रासाद

(आ) लिंगराज देवालय, भुवनेश्वर

(अ) कैलास प्रासाद, संकल्पचित्र, २.३०–४२

(इ) भद्रपीठ
कैलास प्रासादाचा अधोच्छन्द–शिल्पसारणीनुसार

**चित्र ३६ – वैताल देऊळ**

(अ) वैताळ, संकल्पचित्र

(आ) पूर्वेकडील, समोरची बाजू

(इ) पश्चिम ( पाठीमागची ) व दक्षिण बाजू

चित्र ३७ — वैताल देऊळ

(अ) नैऋत्येकडील छप्पर

(आ) दक्षिण बाजू

चित्र ३८ – रथयुक्त प्रासाद, २.६८–९७

(अ) परशुरामेश्वराचे देवालय, भुवनेश्वर

(आ) भैरव यंत्र, २.६९–७२

चित्र ३९ – परशुरामेश्वराचे देवालय

चित्र ३९ – परशुरामेश्वराचे देवालय

(आ) दरवाजाप्रमाणे दिसणारा कोनाडा, २.८१

(अ) अनर्थ, तपशील, २.७८

(इ) शिखर, २.८४–९१

(इ) गौरी देवालय

**चित्र ४० — हेमकूट प्रासाद**

(अ) हेमकूट प्रासाद, संकल्पचित्र, र.१००

(आ) गौरी प्रासाद, भुवनेश्वर

(आ) गंगेश्वराचे देवालय, ब्यालिसबत्ती

(इ) विमान मालिनी प्रासादाचे लहान शिखर
( चित्र ५७ पहावे )

**चित्र ४१ – हेमकूट प्रासाद**

(ई) न वर्णिलेले देवालय अथवा शिखर

(अ) गौरी देवालयाचा वरचा भाग

(अ) प्रकार २ : वैताल देऊळ

(आ) प्रकार ४ : मोहिनी देऊळ

**चित्र ४२ – निरनिराळे कोणक, २.१०६–११५**

(इ) प्रकार ५ : मार्कण्डेयेश्वराचे देवालय

(ई) प्रकार ८ : मुक्तेश्वराचे देवालय

चित्र ४३ — प्रकार आठ चे निरनिराळे कोणक

(अ) भद्रपीठ, ब्रह्मेश्वराचे देवालय

(आ) वृत्तपीठ, नागेश्वराचे देवालय

(इ) वृत्तपीठ, सिद्धेश्वराचे देवालय

(ई) भद्रपीठ, राजराणी देवालय

(आ) कुंभ प्रकारचा, चित्रकरिणी देवालय

(अ) (आ) (इ) (ई) (उ) (ऊ)

(अ) अनुराहाचे संकल्पचित्र

(अ) गृहप्रकारचा (ई) मिश्रप्रकारचा
(इ) कुंभप्रकारचा (उ) गुण प्रकारचा

**चित्र ४४ — निरनिराळे अनुराह, २.११६—१२४**

(इ) गृह प्रकारचा, भास्करश्वराचे देवालय

(ई) गुण प्रकारचा, मुक्तेश्वराचे देवालय

## चित्र ४५ – अनर्थ व राहा

(अ) निरनिराळे अनर्थ, संकल्पचित्र, २.१२५–१३५

(आ) गुण प्रकारचा राहा, मुक्तेश्वराचे देवालय

(इ) मंडलद्वार प्रकारचा अनर्थ<br>वज्रमस्तक प्रकारचा राहा } मार्कण्डेयेश्वराचे देवालय

## चित्र ४६ – निरनिराळे राहा, २.१३६–१५१

(अ) गम्बुजा, संकल्पचित्र

(आ) गुण, संकल्पचित्र

(इ) रथांसह राहा, बाणेश्वराचे देवालय

(ई) गम्बुजा, मोहिनीचे देवालय

(उ) छेद, ब्रह्मेश्वराचे देवालय

## चित्र ४७ – नाटाम्बराच्या मूर्ती

(अ) नाटाम्बर यन्त्र व वामदेव, २.२०३

(आ) वामदेव, काकटपुर येथील जुने देवालय, २.१८७

(इ) नाटाम्बर क्र. २, वैताल देऊळ, भुवनेश्वर, २.१९२

चित्र ४८ – पद्मगर्भ प्रकारचे देवालय, २.२५५

तीर्थेश्वराचे देवालय, भुवनेश्वर, पुढची बाजू

(इ) कोणक, संकल्पचित्र, २.२७०

(ई) कोणक, तीर्थेश्वराचे देवालय

**चित्र ५० – पद्मगर्भाचे पंचकर्म व कोणक**

आलम्ब

(आ) पंचकर्म, तीर्थेश्वराचे देवालय, भुवनेश्वर

(अ) पंचकर्म, संकल्पचित्र, २.२६२

चित्र ५१ – अनुराहावरील नागस्तंभांची संकल्पचित्रे, २.२८८–२९६

(इ) फणा

(ई) नागांचे प्रकार

(अ) स्तंभ

(आ) स्तंभ

चित्र ५२ – नागस्तंभांचे प्रकार

(आ) वाराहीचे देवालय

(अ) कोणार्क

(ई) कोणार्क

(इ) मुक्तेश्वराचे देवालय

चित्र ५३ – पद्मगर्भाचा अनर्थ, २.२९७

(अ) अनर्थ, संकल्पचित्र

(आ) अनर्थ-पाग. तीर्थेश्वर

पद्मगर्भाचा राहा, २.३९२

(उ) राहा, तीर्थेश्वराचे देवालय

(इ) राहा, संकल्पचित्र

(ई) राहा, नक्षीसह व नक्षीशिवाय, संकल्पचित्र

## चित्र ५४ – तीर्थेश्वराचे देवालय

(आ) ऊर्ध्वगार्भिका व बाजूंच्या कुड्यस्तंभांचा वरचा भाग, २.३७०

(अ) तल गर्भिका, २.३३७

(इ) गर्भिका, थरविभाग

चित्र ५५ – तीर्थेश्वराचे देवालय

(इ) कोनाड्याचा कुड्यस्तंभ, २.३४५

(ई) कोनाड्यासह ऊर्ध्वगर्भिका, २.३५०
ऊर्ध्व बन्धना, २.३३५

(अ) तलगर्भिका, संकल्पचित्र

(आ) तलगर्भिका

## चित्र ५६ – तीर्थेश्वराचे देवालय

(इ) राहावरील वज्रमस्तक, मागची बाजू, २.३९२

(अ) ऊर्ध्ववन्धना, संकल्पचित्र

(आ) ऊर्ध्व बन्धना, २.३७९

चित्र ५७ — कामगर्भ किंवा विमानमालिनी प्रकारचे देवालय, २.४०९

वाराहीचे देवालय, चौरासी

चित्र ५८ – वाराहीचे देवालय, चौरासी

वाराहीचे देवालय, चौरासी

कामगर्भ देवालयाचे पंचकर्म

(आ) पंचकर्म, वाराहीचे देवालय, उत्तर बाजू, २.४१८

चित्र ६० — वाराहीचे देवालय, चौरासी

(अ) कोणक-पाग व अनुराह, २.४६६

(आ) कोण विमानिका २.४४९

चित्र ६१ – वाराहीचे देवालय, चौरासी

(अ) अनर्थ व दोन प्रकारचे अनुराह ( २.४६६ व २.४९४ )

(आ) अनुराहाच्या पायथ्याशी असलेले सिंहमुख

चित्र ६३ – वाराहीचे देवालय, चौरासी

(अ) राहा-पाग, २.५४३

(आ) सूर्य, पार्श्वदेवता

चित्र ६४ – राहा विमानिका

(आ) वज्रमस्तकाची आकृती

(अ) निशा व विमानिका

(इ) राहा विमानिकेवरील तीन प्रकारच्या नक्षी

चित्र ६५ – वाराहीचे देवालय, चौरासी

(अ) राहा विमानिका, २.५५३

(आ) विमानिकेसह राहा-पाग

चित्र ६६ – वाराहीचे देवालय, चौरासी

(अ) राहाचा वरचा भाग, दक्षिण बाजू व छप्पर

(आ) विमान व मुखशाला यांचा जोड, २.५९५

(अ) वरचे थरविभाग व छप्पर (पश्चिम पाठीमागची बाजू) २.६११

**चित्र ६७ – वाराहीचे देवालय, चौरासी**

(आ) बेढ व छप्पर (खर्पर)

चित्र ६८

(अ) मुद्रका-भाग, वाराहीचे देवालय, २.६२३–६४८

(ई) कळस, २.६८४

(आ) छप्पराचे थरविभाग

(उ) यूप, कोणार्क, २.६८७

(इ) सिंह यंत्र, २.६७५
छप्परांचे प्रकार, २.६४९–६५८

चित्र ६९ – सिंहांचे प्रकार

(आ) जाग्रता, कोणार्क

(इ) जाग्रता, ब्रह्मेश्वराचे देवालय

(अ) विराज, कोणार्क

चित्र ७१ – वाराहीचे देवालय, चौराशी

(अ) गर्भगृहांतील मूर्ती

(आ) वाराही देवी

(इ) गर्भगृहाचे प्रवेशद्वार

(ई) द्वारपालिका, २.७१३

(उ) मूर्तीचे आसन, २.७३९ (ऊ) कणिपीठ व पद्मपीठ, २.७५०

चित्र ७२ – भूर्जपत्रावर लिहिलेल्या शिल्पप्रकाशाची काही वेचक भूर्जपत्रे